# संस्कृतव्याकरणम्

## (संस्कृत-शास्त्रम्)

ऐच्छिकम्

कक्षा ९ – १०

भाग एक



# संस्कृतव्याकरणम्

## ( संस्कृतशास्त्रम् )

ऐच्छिकम्

नवमदशमकक्षयोः कृते

## भाग एक

प्रकाशक

जनक शिक्षा सामग्री केन्द्र लिमिटेड

सानो ठिमी, भक्तपुर



"राष्ट्रिय प्रतिभालाई फुलाउने, फलाउने
तथा जनताको मनोभावनालाई
विकासमूलक बनाउने नीति लिई लागू
गरिएको यस राष्ट्रिय शिक्षा
योजनाबाट केही वर्षभित्रै एउटा
जागरूक, परिश्रमी र उन्नतिशील
समाजको सिर्जना हुन सक्नेछ भन्ने
मैले आशा लिएको छु।"

—श्री ५ वीरेन्द्र

# हाम्रो भनाइ

शिक्षालाई जीवन सापेक्ष गराई राष्ट्रिय एकता, सार्वभौमिकता राजमुकुट र स्वतन्त्रताको रक्षा गर्ने, कर्तव्यनिष्ठ नागरिक तयार गराउने र सामाजिक जीवन यापनको लागि आवश्यक ज्ञान र शीप हासिल गराउने राष्ट्रिय शिक्षा पद्धतिको योजना २०२८ को विशुद्ध उद्देश्य अनुरूप विद्यालयस्तरका पाठ्यक्रम र पाठ्यपुस्तकहरूको विकास गर्ने प्रक्रिया चालू रहिआएको छ ।

श्रमप्रति श्रद्धा जगाई उपयोगी नागरिक तयार गराउने र देशभक्ति, राजभक्ति तथा ईश्वरभक्ति सिकाई अनुशासित सुयोग्य नागरिक तयार गराउने माध्यमिक शिक्षाको उद्देश्यमा आधारित संशोधित पाठ्यक्रम २०३८ अनुसार यो पाठ्यपुस्तक तयार गराई प्रकाशमा ल्याइएको छ ।

यस पाठ्यपुस्तकको संकलन तथा संपादन श्री विष्णुप्रसाद न्यौपाने र श्री शुकदेव शर्माले गर्नु भएको हो ।

सम्बन्धित विषयका अनुभवी शिक्षक, प्राध्यापक एवं विशेषज्ञहरूको सुझाव समेतलाई ध्यानमा राखी यस पाठ्यपुस्तकलाई सकेसम्म स्तरयुक्त बनाउने प्रयास गरिएको छ तापनि यसमा भाषागत, विषयगत, शैलीगत कतिपय त्रुटिहरू अझ हट्न नसकेका होलान् । तिनका सुधारका लागि शिक्षक, अभिभावक विद्यार्थी लगायत सबै बुद्धिजीवी पाठकहरूको सक्रिय सहयोगको महत्त्वपूर्ण भूमिका रहने हुँदा यस पवित्र सेवा कार्यमा यहाँहरूको रचनात्मक सुझावको यो केन्द्र सदैव स्वागत गर्दछ ।

श्री ५ को सरकार
शिक्षा तथा संस्कृति मन्त्रालय
पाठ्यक्रम पाठ्यपुस्तक तथा निरीक्षण विकास केन्द्र
हरिहर भवन
ललितपुर, नेपाल ।

२०४१ मंसीर

# विषय-सूची

## पूर्वतिङन्ते



## उत्तरतिङन्ते

## कृदन्ते

# अथ तिङन्तं प्रारभ्यते

## तिङन्ते भ्वादयः

धातोर्द्वये प्रत्ययाः । तिङः कृतश्च । तत्र आदौ धातोर्विधीयमानेषु लकारेष्वादिश्यमानास्तिङः प्रदर्श्यन्ते । कृत्प्रत्ययाश्च धातोरधिकारे प्रयोक्ष्यन्ते ।

**श्रीः । लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ । लिङ । लुङ । लृङ एषु पञ्चमो लकारश्छन्दोमात्रगोचरः(१) ।**

**लः कर्मणि च भावे चाकर्मकेभ्यः ३।४।६६**

लकाराः सकर्मकेभ्यः(२) कर्मणि कर्तरि च स्युरकर्मकेभ्यो (३) भावे कर्तरि च ।

**वर्तमाने लट् ३।२।१२३**

वर्तमानक्रियावृत्तेर्धातोर्लट् (४) स्यात् । अटावितौ । उच्चारणसामर्थ्याल्लस्य नेत्वम् । भू सत्तायाम् । कर्तृ विवक्षायां भू ल् इति स्थिते ।

**तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ ३।४।७८**

एतेऽष्टादश लादेशाः स्युः ।

**लः परस्मैपदम् १।४।९९**

लादेशाः परस्मैपदसंज्ञाः स्युः ।

**तङानावात्मने पदम् १।४।१००**

तङ्प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः। पूर्वसंज्ञापवादः ।

**अनुदात्तङित आत्मपनेदम् १।३।१२**

अनुदात्तेत(५) उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मने पदं स्यात् ।।

---

(१) लेट्लकारो वेद एव प्रवर्तते ।

(२) फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् ।

(३) फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम् ।

(४) प्रारब्धापरिसमाप्तिर्वर्तमानता ।

(५) यथा एध वृद्धावित्यत्र धकारोत्तरवर्ती अकारोऽनुदात्तः ।

**स्वरितञितः कर्त्रभिप्राये क्रियाफले १।३।७२**

स्वरितेतो(१) ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले ॥

**शेषात्कर्तरि परस्मैपदम् १।३।७८**

आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि लस्य परस्मैपदं स्यात् ॥

**तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १।४।१०१**

तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ।

**तान्येकवचनद्विवचनबहुवचनान्येकशः १।४।१०२**

लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १।४।१०५**

तिङ्वाच्यकारकवाचिनि (२) युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः ॥

**अस्मद्युत्तमः(३) १।४।१०७**

तथा भूतेऽस्मद्युत्तमः ॥

**शेषे प्रथमः १।४।१०५**

मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू ति इति जाते ।

**तिङ्शित्सार्वधातुकम् ३।४।११३**

तिङः शितश्च धात्वधिकारोक्ताः एतत्संज्ञाः स्युः ॥

**कर्तरि शप् ३।१।६८**

कर्त्रर्थे सार्वधातुके परे धातोः शप् ॥

**सार्वधातुकार्धधातुकयोः ७।३।८४**

अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् ॥ अवादेशः । भवति । भवतः(४) ॥

---

(१) यथा भज सेवायामित्यत्र जकारोत्तरवर्ती अकारः स्वरितः ।

(२) तिङावाच्यं यत् कारकं (कर्तृरूपं कर्मरूपं वा) तद्वाचिनि– तद्वाचके । यथा-त्वं भवसि । त्वमनुभूयसे (मया) ।

(३) तिङ्वाच्यकारकवाचिनि अस्मदि प्रयुज्यमानेऽप्रयुज्यमाने च उत्तमः (पुरुषः) यथा– अहं भवामि । अहं अनुभूये ।

(४) विभक्तित्वेन सकारस्य नेत्वम् ।

**झोऽन्तः ७।३।१**

प्रत्ययावयवस्य झस्यान्तादेशः । अतो गुणे । भवन्ति । भवसि । भवथः । भवथ ।

**अतो दीर्घो यञि ७।३।१०१**

अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ।

**शेषे विभाषाऽकखादावषान्त उपदेशे ८।४।१८**

उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन्धातावुपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं वा स्यात् । प्रणिभवति ।

**परोक्षे लिट् ३।४।११५**

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट्(१) स्यात् । लस्य तिबादयः ।

**परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३।४।८२**

लिटस्तिबादीनां णलादयः स्युः । भू अ इति स्थिते ।

**भुवो वुग्लुङ्लिटोः ६।४।८८**

भुवो वुगागमः स्यात् लुङ्लिटोरचि ॥

**लिटिधातोरनभ्यासस्य ६।१।८**

लिटिपरेऽनभ्यासस्य धात्ववयस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् इति जाते ।

**पूर्वोऽभ्यासः ६।१।४**

अत्र यं द्वे तयोः ॥

**हलादिः शेषः**

अभ्यासस्यादिर्हल् शिष्यतेऽन्ये हलो लुप्यन्ते ॥

**ह्रस्वः ७।४।५९**

अभ्यासस्याचः ॥

**भवतेरः ७।४।७३**

भवतेरभ्यासोकारस्य अः स्याल्लिटि ।

---

(१) वर्तमानध्वंसत्वं भूतत्वम्, व्यतीताया रात्रेः पश्चार्धेन आगामिन्या पूर्वार्धेन च सहितः कालोऽद्यतनः, तद्भिन्नोऽनद्यतनः ।

**अभ्यासे चर्च ८।४।५४**

अभ्यासे झलां चरः स्युर्जशश्च। झशां जशः खयां चर इति विवेकः। बभूव। बभूवतुः। बभूवुः ॥

**लिट् च ३।४।११५**

लिडादेशस्तिङार्धधातुकसंज्ञः स्यात् ॥

**आर्धधातुकस्येड्वलादेः ७।२।३५**

बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम(१)।

**अनद्यतने लुट् ३।३।१५**

भविष्यत्यनद्यतनेऽर्थे(२) धातोर्लुट्॥

**स्यतासी लृलुटोः ३।१।३३**

धातोरेतौ स्तो लृलुटोः परतः। शबाद्यपवादः। लृ इति लृङ्लृटोर्ग्रहणम्।

**आर्धधातुकं शेषः ३।४।११४**

तिङशिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात्। इट् ॥

**लुटः प्रथमस्य डारौरसः २।४।८५**

डित्वसामर्थ्यादभस्यापि टेर्लोपः। भविता ॥

**तासस्त्योर्लोपः ७।४।५०**

सादौ प्रत्यये ॥

**रि च ७।४।५१**

रादौ प्रत्यये तथा॥ भवितारौ। भवितारः। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः।

**लृट् शेषे च ३।३।१३**

भविष्यदर्थाद्धातो र्लृट् क्रियार्थायां क्रियायां सत्यामसत्यां च। इट्। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः।

---

(१) असंयोगाल्लिट् कित् इत्यनेन कित्त्वात् 'श्र्युकः किति' इति इण् निषेधे ततः क्रादिनियमादिट्।

(२) वर्तमानात्, उत्तरवर्ती कालो, भविष्यत् कालः।

**लोट् च ३।३।१६२।**

विध्यादिस्वर्थेषु धातोर्लोट् ॥

**आशिषि लिङ्लोटौ ३।३।१७३**

**एरुः ३।४।८६**

लोट इकारस्य उः । भवतु ।

**तुह्योस्तातङाशिष्यन्यतरस्याम् ७।१।३५**

आशिषि तुह्योः। परत्वात्सर्वादेशः । ननु ङिच्चेत्यस्य क्वावकाश इति चेच्छृणु । अनन्यार्थङकार युक्तानङादिष्विति गृहाण । भवतात (१) ।

**लोटो लङ्वत् ३।४।८५**

लोटस्तामादयः सलोपश्च ।

**तस्थस्थमिपां तांतन्तामः ३।४।१०१**

ङितश्चतुर्णां तामयदाः स्युः । भवताम् । भवन्तु ।

**सेर्ह्यपिच्च ३।४।८७**

लोटः सेर्हि सो ऽपिच्च ।

**अतो हेः ६।४।१०५**

लुक् । भव । भवतात् । भवतम् । भवत ।

**मेर्निः ३।४।८९**

लोटः ।

**आडुत्तमस्य पिच्च ३।४।९२**

लोडुत्तमस्याट् स पिच्च । हिन्योरुत्वं न, इकारोच्चारण सामर्थ्यात् । भवानि ।

**ते प्राग्धातोः १।४।८०**

ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः ।

**आनि लोट् ८।४।१६**

उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि ।

(दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः) दुस्थितिः । दुर्भवानि ।

---

(१) लुगपेक्षया परत्वाद्धेस्तातङ । अन्तरङ्गानपि विधीन् इति परिभाषा तु अनित्यात्वान्नेह

(२) आटः पित्त्वफलं तु सुनवै इत्यादौ फलति ।

(अन्तः शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं (१) वाच्यम्) अन्तर्भवाणि ।

**नित्यं ङितः ३।४।९९**

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः । अलोऽन्त्यस्येति सलोपः । भवाव । भवाम ।

**अनद्यतने लङ ३।२।१११**

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ ।।

**लुङलङलृङक्ष्वडुदात्तः ३।४।७१**

एष्वङ्गस्याट् ।

**इतश्च ३।४।१००**

ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः ।

अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ।

**विधिनिमन्त्रणामन्त्रणा (२) धीष्टसंप्रश्नप्रार्थनेषु लिङ ३।३।१६१**

एष्वर्थेषु धातोर्लिङ ।

**यासुट् परस्मैपदेषुदात्तो ङिच्च ।३।४।१०३**

लिङः परस्मैपदानां यासुडागमो ङिच्च । ङित्वोक्तेर्ज्ञायते क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेध इति । तेन वक्ष्यमाणेत्यत्र ङीब्न ।

**लिङः सलोपोऽन्त्यस्य ७।२।७९**

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः । इति प्राप्ते ।

**अतो येयः ७।२।८०**

अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय । गुणः । 'लोपो व्योर्वलि' । भवेत् (३) । भवेताम् ।

---

(१) अन्तर्धा इत्यत्र अङ्गविधौ, अन्तरुपसर्गत्वम् ।
अन्तर्धिरित्यत्र किविधौ च, अन्तरुपसर्गत्वम् ।

(२) विधिः = प्रेरणम् । भृत्यादेर्निकृष्टस्य प्रवर्तनम् । निमन्त्रणं = नियोगकरणमावश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणं = कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः । सम्प्रश्न = प्रार्थना ।

(३) कृताकृतप्रसङ्गिविधेर्नित्यत्वात् पूर्वं यासुटि ततः शपि ।

**झेर्जुस् ३।४।१०**

लिङः । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ।

**लिङाशिषि ३।४।११६**

आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् ।

**किदाशिषि**

आशिषि लिङो यासुट् कित् । स्कोरिति सलोपः ।

**क्ङिति च १।१।४**

गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म् ।

**लुङ ३।२।११०**

भूतार्थे धातोर्लुङ ।

**माङि लुङ ३।३।१७५**

सर्वलकारापवादः ।

**स्मोत्तरे लङ च ३।३।१७६**

स्मोत्तरे माङि लङ स्याल्लुङ च

**च्लि लुङि ३।२।४३**

शबाद्यपवादः ।

**च्लेः सिच् ३।१।४४**

**गतिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २।४।७७**

लुक् । गापाविहेणादेशपिवती गृह्येते ।

**भूसुवोस्तिङि ७।३।८८**

भू सू एतयोः सार्वधातुके तिङि गुणो न । अभूत् । अभूताम् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ।

**न माङयोगे ६।४।७४**

अडाटौ न स्तः ।

परिभाषा र उदाहरण

१– गित् =                    २– कित् =

मा भवान् भूत् । मा स्म भवत् । मा स्म भूत् ।

**लिङनिमित्ते लृङ क्रियातिपत्तौ ३।३।१३९**

(१) हेतुहेतुमद्भावादि (२) लिङनिमित्तं यत्र तत्र भविष्यदर्थाद्धातोर्लृङ्क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् इत्यादि ज्ञेयम् । प्रभवतीत्यादौ उपसर्गाणामसमस्त्वेऽपि संहिता नित्या । तदुक्तम् —

**संहितैकपदे नित्या नित्या धातुपसर्गयोः ।**

**नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥१॥ ॥ इति ॥**

सन्ताद्यर्थनिर्देशश्चोपलक्षणम् । यागात्स्वर्गो भवतीत्यादौ उत्पद्यत इत्याद्यर्थात् । उपसर्गास्त्वर्थ विशेषस्य द्योतकाः । प्रभवति । पराभवति । संभवति । अनुभवति । अभिभवति । उद्भवति । परिभवति । इत्यादौ विलक्षणार्थाधिगतेः । उक्तं च —

**उससर्गेण धात्वर्थो बलादन्यत्र नीयते ।**

**प्रहाराहारसंहारविहारपरिहारवत् ॥१॥ ॥ इति ॥**

अत सातत्य गमने । अतति । अततः । अतन्ति । अतसि । अतथः । अतथ । अतामि । अताव । अताम ।

**अत आदेः ७।४।७०**

अभ्यासस्यादेरतो दीर्घः स्यात् । पररूपापवादः । आत । आततुः । आतुः । आतिथ । आतथुः । आत । आत । आतिव । आतिम । अतिता । अतिष्यति । अततु ।

**आडजादीनाम् ६।४।७२**

अजादरेङ्गस्याट् लुङ–लङ–लृङक्षु । आतत् । अतेत् । अत्यात् । लुङि सिचि इडागमे कृते ।

**अस्तिसिचोऽपृक्ते ७।३।९६**

विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः ।

**इट ईटि ८।२।२८**

इटः परस्य सस्य लोपः स्यादीटि । (**सिज्लोप एकादेशे सिद्धो वाच्य**) । आतीत् । आतिष्टाम् ।

**सिजभ्यस्तविदिभ्यश्च ३।४।१०९**

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् । आतिषुः । आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म । आतिष्यत् । एवम् **अव रक्षणगतिकान्तिप्रीतितृप्त्यवगम-प्रवेश श्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङगन हिंसादान भागवृध्दिषु ।** अवतीत्यादि ।

---

(१) हेतु=　　　　(२) हेतुमदभाव=

षिधगत्याम् ।

**पुगन्तलघूपधस्य च ७।३।८६**

पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः सार्वधातुकार्धधातुकयोः। धात्वादेरिति सः । सेधति । षत्वम् । सिषेध ।

**सेक्, सृप्, सृ, स्तृ, सृज, स्तृ, स्त्यान्ये दन्त्याजन्तसादयः ।**

**एकाचः षोपदेशाः, ष्वष्क, स्विद्, स्वञ्ज् स्वप् स्मिङः ॥१॥**

दन्त्यः केवलदन्त्यो न तु दन्त्योष्ठजोऽपि। ष्वस्कादीनां पृथग् ग्रहणात् ॥

**असंयोगाल्लिट् कित् १।२।५**

असंयोगात्परोऽपिल्लिट् कित् स्यात् । सिषिधतुः । सिषिधुः । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । सिषिधिम । सेधिता । सेधिष्यति । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् ।

**सात्पदाद्योः ८।३।१११**

सातेः पदादेश्च सस्य षो न । इति निषेधे प्राप्ते ॥

**उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ८।३।६५**

उपसर्गस्थान्निमित्तादेषां सस्य षः ॥

**सदिरप्रतेः ८।३।६६**

प्रतिभिन्नादुपसर्गात्सदेः सस्य षः ॥

**स्तम्भेः ८।३।६७**

सौत्रस्य षः ॥

**अवाच्चालम्बनाविदूर्ययोः ८।३।६८**

अवात् स्तन्भेरेतयोरर्थयो सस्य षः ।

**वेश्च स्वनो भोजने ८।३।६९**

व्यवाभ्यां स्वनतेः सस्य षः ।

**परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ८।३।७०**

परिनिविभ्यः परेषामेषां सस्य षः । निषेधति ।

**प्राक्सितादड्व्यवायेऽपि ८।३।७१**

सितशब्दात्प्राग्ये सुनोत्यादयस्तेषामड्व्यवायेऽपि सस्य षः। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्।

**स्थादिष्वभ्यासेन चाभ्यासस्य ८।३।६४**

प्राक्सितात्स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्, एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम्। निषिषेध। निषिषिधतुः।

**सेधतेर्गतौ ८।३।११३**

गत्यर्थस्य सेधतेः सस्य षो न। गङ्गां विसेधति एवम् चिती संज्ञाने। **शुच शोके। गद व्यक्तायां वाचि।** गदति।

**नेर्गद नद पत पद घु मा स्यति हन्ति याति वाति द्राति प्साति वपति वहति शाम्यति चिनोति देग्धिषु च ८।३।१७**

उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं स्यात् गदनदादिषु परेषु। प्रणिगदति।

**कुहोश्चुः ७।४।६२**

अभ्यासकवर्गहकारयोश्चवर्गादेशः।

**अत उपधायाः ७।२।११६**

वृद्धिः स्यात् ञिति णिति च प्रत्यये। जगाद। जगदतुः। जगदुः। जगदिथ। जगदथुः। जगद।

**णलुत्तमो वा ७।१।९१**

णित् स्यात्। जगाद। जगद। गदिता। गदिष्यति। गदतु। अगदत्। गदेत्। गद्यात्।

**अतो हलादेर्लघोः ७।२।७**

हलादेर्लघोरतो वृद्धिर्वेडादौ सिचि परस्मैपदेषु। अगादीत्। अगदीत्। अगदिष्यत्। **णद अव्यक्ते शब्दे।**

**णो नः ६।१।६५**

धात्वादेर्णस्य नः। णोपदेशास्त्वनर्द् नाटिनाथ्नाध् नन्द् नक्कनॄनृतः।

**उपसर्गादसमासेऽपि णोपदेशस्य ८।४।१४**

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः समासेऽसमासेऽपि। प्रणदति। नदति। ननाद।

**अत एकहल्मध्येऽनादेशादेर्लिटि ६।४।१२०**

लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिटि। नेदतुः। नेदुः।

**थलि च सेटि ६।४।१२१**

इड्वति थलि प्रागुक्तं स्यात्। नेदिथ। नेदथुः। नेद। ननाद। ननद। नेदिव। नेदिम। नदिता। नदिष्यति। नदतु। अनदत्। नदेत्। नद्यात्। अनादीत्(१)। अनदीत्। अनदिष्यत्। **च्युतिर् क्षरणे। (इर इत्संज्ञा वाच्या)**

**शर्पूर्वाः खयः ७।४।६१**

शिष्यन्ते अभ्यासस्य। हल दिशेषापवादः। चुश्च्योत।

**इरितो वा १।३।५७**

इरितो धातोश्च्लेरङ वा परस्मै पदेषु। अश्च्युतत्। अश्च्योतीत्। यकाररहितोऽप्ययम्। श्चोतति चुश्चोत। अश्चोतीत्। **च्युतिर् आसेचने।** च्योतति। **टुनदि समृद्धौ।**

**आदिर्ञिटुडव(२) १।३।५**

उपदेशे धातोराद्या एते इतः स्युः।

**इदितो नुम् धातोः ७।१।५८**

नन्दति। ननन्द। नन्दिता। नन्दिष्यति। नन्दतु। अनन्दत्। नन्देत्। इदित्वान्नलोपो न। नन्द्यात्। अनन्दीत्। अनन्दिष्यत्। एवं **कुथि पुथि लुथि मथि हिंसा संल्केशनयोः। बिदि अवयवे।** बिन्दति। भिदीति पाठान्तरम्। भिन्दति। **गडि वदनैकदेशे।** गण्डति। **चदि आह्लादने।** चन्दति। **त्रदि चेष्टायाम्।** त्रन्दति। **कदि क्रदि क्लदि आह्वाने रोदने च। क्लिदि परिदेवने। तकि कृच्छ्रजीवने। युगि जुगि वुगि वर्जने। मघि मण्डने। शिघि आघ्राणे। मन्थ विलोडने।** मन्थति। ममन्थ। कित्वान्नलोपः। मथ्यात्। **अर्च पूजायाम्।** अर्चति।

**तस्मान्नुड् द्विहलः ७।४।७१**

द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट्। आनर्च।

---

(१) अतो हलादेर्लघोरित्यनेन पाक्षिकी वृद्धिः।

(२) ञि–टु–डु एषामित्वफलानि क्रमेण, ञीतस्य ञीतः क्त, टु इत्यस्य ट्वितोऽथुच्, डु इत्यस्य ड्वितः क्त्रिः। क्रमेणोदाहरणानि – ञिष्विदा स्विन्नः, टुनदि नन्दथुः, डुपचष् पक्त्रिमम्।

आनर्चतुः । आनर्चतुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् । एवम् । **अर्द गतौ याचने च । अति अदि बन्धने । वन षण संभक्तौ ।** वनति । ववान ।

**न शसददवादिगुणानाम् ६।४।१२४**

शसेर्ददेर्वकारादीनां गुणशब्देन भावितो योऽत् तस्य च एत्वाभ्यासलोपौ न । ववनतुः । ववनुः । सनति । ससान । सेनतुः । सेनुः ।

**ये विभाषा ६।४।४३**

जनसनखनामात्वं वा यादौ क्ङिति । सायात् । सन्यात् । **वज व्रज गतौ ।** व्रजति । वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ।

**वदव्रजहलन्तस्याचः ७।२।३**

एषामचो वृद्धिः परस्मैपदे सिचि । अव्राजीत् । अव्रजिष्यत् । कटे वर्षावरणयोः । कटति । चकाट । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् ।

**ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७।२।५**

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि । अकटीत् । अकटिष्यत् । **गुपू रक्षणे ।**

**गुपूधूपविच्छिपणिपनिभ्य आयः ३।१।२८**

स्वार्थे ।

**सनाद्यन्ता धातवः ३।१।३२**

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः ।

**सन् क्यच् काम्यच् क्यङ क्यषोऽथाचारक्विब्णिज्यङौ तथा ।**
**यगाय इयङ णिङ चेति द्वादशामी सनादयः ॥१॥**

सनाद्यन्ताधातव इत्यस्यानन्तरं भूवादय इत्येव सूत्रयितुं युक्तम् । धातुत्वाल्लडादयः । गोपायति ।

**आयादय आर्धधातुके वा ३।१।३१**

आर्धधातुकविवक्षायामाये यङ णिङो वा स्युः ।

**(कास्यनेकाच आम्वक्तव्यो लिटि)**

श्रास कासोराम्बिधानान्मस्य नेत्वत् ।

**अतो लोपः ६।४।४१**

आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके ।

**आमः २।४।८१**

आमः परस्य लुक् ।

**कृञ्चानुप्रयुज्यते लिटि ३।१।४०**

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनु प्रयुज्यन्ते । तेषां द्वित्वादि ।

**उरत् ७।४।६६**

अभ्यासस्य ऋतोऽत्स्यात्प्रत्यये । वृद्धिः । गोपायाञ्चकार(१) । द्वित्वात्परत्वाद्यणि प्राप्ते ।

**द्विर्वचनेऽचि १।१।५९**

द्वित्वनिमित्तेऽचि परे अच आदेशो न द्वित्वे कर्तव्ये । गोपायांचक्रतुः। गोपायांचक्रुः।

**एकाच उपदेशे (२)ऽनुदात्तात् ७।२।१०**

उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्यार्धधातुकस्येण् (३) न–

**ऊदॄदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।**
**वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥१॥**

कान्तेषु । शक्लेकः । चान्तेषु । पच् । मुन् । रिच् । वच् । विच् । सिच् । एते षट् । छान्तेषु प्रच्छचेकः । जान्तेषु त्यज् । निजिर् । भज् । भञ्ज् । भुज् । भ्रस्ज । मस्ज् । यज् । युज् । रुज् । रुञ्ज् । विजिर् । सञ्ज् । स्वञ्ज् । सृजः। पञ्चदश । दान्तेषु । अद् । क्षुद् । खिद् । छिद् । तुद् । नुद् । पद्य । भिद् । विद्यति । विनद् । शद् । सद् । स्विद्य । स्कन्द् । हद् । पञ्चदश । धान्तेषु । क्रुध् । क्षुध् । बुध्य । बन्ध् । युध् । रुध् । राध् । व्यध् । शुध् । साध् । सिध्य । एकादश । नान्तेषु मन्यहनौ द्वौ । पान्तेषु । आप् । क्षिप् । क्षुप् । तप् । तिप् । तृप्य । दृप्य । लिप् । लुप् । वप् । शप् । स्वप् । सृप् । त्रयोदश ।

---

(१) गोपायाम् इति स्थिते कृदतिङ इति कृत्त्वं, कृन्मेजन्त इति अव्ययत्वं ततः सौ लुकि चेति विशेषः ।

(२) 'उपदेशे' इति देहलीदीपकन्यायेनोभयान्वयि

(३) पुरस्तादपवादन्यायेन आर्धधातुकस्येड्वलादेरित्यस्यैव बाधको नेतरेषाम् । न तु तीषसह–इत्यादि ।

भान्तेषु । यभ् । रभ् । लभ् । त्रयः । मान्तेषु । गम् । नम् । रम् । यम् । चत्वारः । शान्तेषु । क्रुश् । दंश् । दिश् । दृश् । मृश् । रिश् । रुश् । लिश् । विश् । स्पृश् । दश । षान्तेषु । कृष् । त्विष् । तुष् । द्विष् । दुष् । पुष्य । पिष् । विष् । शिष् । शुष् । श्लिष्य । एकादश । सान्तेषु । घस्वसती द्वौ ।

हान्तेषु । दह् । दुह् । दिह् । नह् । मिह् । रुह् । लिह् । वह् । अष्टौ ।

## अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ।

गोपायांचकर्थ । गोपायांचक्रथुः । गोपायांचक्र । गोपायांचकार । गोपायांचकृव । गोपायांचकृम । गोपायांबभूव । गोपायामास । जुगोप । जुगुपतुः । जुगुपुः ।

## स्वरतिसूतिसूयति धूञूदितो वा ७।२।४४

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा । जुगोपिथ, जुगोप्थ । गोपायिता । गोपिता । गोप्ता । गोपायिष्यति । गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । गोपाय्यात् । गुप्यात् । अगोपायीत् ।

## नेटि ७।२।४

इडादौ सिचि हलन्तलक्षणा वृद्धिर्न । अगोपीत् । अगौप्सीत् ।

## झलो झलि ८।२।२६

झलःपरस्य सस्य लोपः स्याज्झलि । अगौप्ताम् । अगौप्सुः । अगौप्सीः । अगौप्तम् । अगौप्त । अगौप्सम् । अगौप्स्व । अगौप्स्म । अगोपायिष्यत् । अगोपिष्यत् । अगोप्स्यत् । क्षि क्षये । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । एकाच इति निषेधे प्राप्ते ।

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ७।२।१३

क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात् ।

## अचस्तास्वत्थल्यनिटो नित्यम् ७।२।६१

उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न ।

## उपदेशेऽत्वतः ७।२।६२

उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न ।

## ऋतो भारद्वाजस्य ७।२।६३

तासौ नित्यानिट ऋदन्तस्यैव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य तु स्यादेव । अयमत्र संग्रहः–

**अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम्।**
**ऋदन्त ईदृङ नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥१॥**

चिक्षयिथ । चिक्षेथ । चिक्षियथुः । चिक्षिय । चिक्षाय। चिक्षय । चिक्षयिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् ।

**अकृत्सार्वधातुकयोर्दीर्घः ७।४।२५**

अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये न तु कृत्सार्वधातुकयोः। क्षीयात् ।

**सिचि वृद्धिः परस्मैपदेषु ७।२।१**

इगन्ताङ्गस्य वृद्धिः परस्मैपदपरे सिचि । अक्षैषीत् । अक्षेष्यत् । **तप सन्तापे** । तपति । ततापि । तेपतुः । तेपुः । तेपिथ । ततप्थ । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत्। तप्यात् । अताप्सीत् । अताप्ताम् । अतप्स्यत् ।

**निसस्तपतावनासेवने ८।३।१०२**

षः स्यात् । आसेवनं पौनः पुन्यं ततोऽन्यस्मिन्विषये । निष्टपति । **क्रमु पादविक्षेपे ।**

**वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ३।१।७०**

एभ्यः श्यन्वा कर्तरि सार्वधातुके । पक्षे शप् ।

**क्रमः परस्मैपदेषु ७।३।७८**

क्रमेर्दीर्घः परस्मैपदे शिति । क्राम्यति । क्रामति । चक्राम ।

**स्नुक्रमोरनात्मनेपदनिमित्ते ७।२।३६**

अत्रैवेट् (१)। क्रमिता । क्रमिष्यति । क्राम्यतु । क्रामतु । अक्राम्यत् । अक्रामत् । क्राम्येत् । क्रामेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यत् । **चमु छमु जमु झमु अदने ।**

**ष्ठिवुक्लमुचमां शिति ७।३।७५**

अचो दीर्घः । (**आङि चम इति वक्तव्यम्**) । आचामति । आङि किम् । चमति । विचमति । अचमीत्। **स्खल संचलने**। स्खलति । चस्खाल ।

**अतो ल्रान्तस्य ७।२।२**

अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः परस्मैपदे सिचि । अस्खालीत् । अस्खलिष्यत् ।

---

(१) स्नु क्रमु धातू उदात्तौ, उदात्तत्वादेव तयोरिट् सिद्धः, ततश्च सूत्रमेतन्नियमार्थमित्यतो व्याचष्टे अत्रैवेट् इति ।

**त्सर छद्मगतौ । अत्सारित् । पा पाने ।**

**पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्र धमतिष्ठ मनयच्छपश्यर्च्छ-धौशीयसीदाः ७।२।७८**

पादीनां पिबादयः स्युरित्संज्ञकशादौ प्रत्यये । पिबादेशोऽदन्तस्तेन न गुणः । पिबति ।

**आत औ णलः ७।२।३४**

आदन्ताद्धातोर्णल औकारादेशः । पपौ ।

**आतो लोप इटि च ३।४।६४**

अजाद्योरार्धधातुकयो क्ङिदिटोः परयोरातो लोपः । पपतुः । पपुः । पपिथ । पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् ।

**एर्लिङि (१) ६।४।६१**

घुसंज्ञाना मास्थागैपिबतिजहतिस्यतीनां चात एत्वमार्धधातुके किति लिङि । पेयात् । गातिस्थेति सिचो लुक् । अपात् । अपाताम् ।

**आतः ३।४।१०१**

सिज्लुकि आदन्तादेव झेर्जुस् ।

**उस्यपदान्तात् ६।१।९६**

अपदान्तादवर्णादुसि पररूपमेकादेशः । अपुः । अपास्यत् । **ग्लै म्लै हर्ष क्षये ।** ग्लायति ।

**आदेच उपदेशेऽशिति ६।१।४५**

उपदेशे एजन्तस्य धातोरात्वं न तु शिति (२) । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् ।

**वान्यस्य संयोगादे ६।४।६८**

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा आर्धधातुके किति लिङि । ग्लेयात् । ग्लायात् ।

**यमरमनमातां सक् च ७।२।७३**

एषां सक् स्यादेभ्यः सिच इट् परस्मैपदेषु । अग्लासीत् । अग्लास्यत् । एवं म्लायति । **धेट् पाने ।** धयति । दधौ ।

---

(१) घु मा स्था गा पा जहातिसां हलीत्यतो हल्वर्जं सर्वमनुवर्तते ।

(२) प्रसज्यप्रतिषेधः, अतो व्याचष्टे शिति नेति ।

**दाधा घ्वदाप् १।१।२०**

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। धेयात्।

**विभाषा धेट्श्व्योः ३।१।४६**

आभ्यां च्लेश्चङ वा।

**चङि ६।१।११**

अनभ्यास–धात्ववयवस्य प्रथमस्यैकाचो द्वे स्तोऽजादेर्द्वितीयस्य। अदधात्। अदधाताम्।

**विभाषाघ्राधेट्शाच्छासः २।४।७८**

एभ्यः सिचो लुग्वा परस्मैपदेषु। अधात् अधाताम्। अधुः। पक्षे इट्सकौ। अधासीत्। अधासिष्टाम् अधासिषु। **ग्लै न्यक्करणे**। ग्लायति। **द्रै स्वप्ने**। द्रायति। **ध्रै तृप्तौ**। ध्रायति। **ध्यै चिन्तायाम्**। ध्यायति। **रै शब्दे**।। रायति। **स्त्यै ष्ट्यै शब्दसंङ्घातयोः**। स्त्यायति। षोपदेशस्यापि सत्वे कृते रूपं तुल्यम्। षोपदेशफलं तु तिष्ठ्यासतीत्यादौ भविष्यति। **खै खदने** खायति। **क्षै जै षै क्षये**। क्षायति। जायति। सायति। घुमास्थेत्यत्र "**विभाषा घ्राधेट**" इत्यत्र च स्यतेरेव ग्रहणं न त्वस्य। तेन एत्वसिज्लुकौ न। सायात्। असासीत्। **कै गै शब्दे**। **शै श्रै पाके**। **पै ओवै शोषणे**। पायात्। अपासीत्। घुमास्थेतीत्वं तदपवाद एलिङीत्येत्वं गातिस्थेति सिज्लुकौ च न। (**लक्षण (१) प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्**) इति पारूपस्य लाक्षणिकत्वात्। **ष्टै वेष्टने**। स्तायति। **स्नै वेष्टने**। शोभायां चेत्येके। स्नायति। **दैप् शोधने**। दायति। अघुत्वादेत्वसिज्लुकौ न। दायात्। अदासीत्। **घ्रा गन्धोपादाने**। जिघ्रति। घ्रायात्। घ्रेयात्। अघ्रात्। अघ्रासीत्। अघ्रास्यत्। **ध्मा शब्दाग्निसंयोगयोः**। धमति। ष्ठा गतिनिवृत्तौ। तिष्ठति। स्थादिष्विति षत्वम्। अधितष्ठौ। उपसर्गादिति षत्वम्। अधिष्ठाता। स्थेयात्। सत्वे कृते प्रकृतिस्तवर्गः स्यात्।

> **नकारजावनुस्वारपञ्चमौ झलि धातुषु।**
> **सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः ॥१॥**

गातिस्थेति सिचो लुक्। अस्थात्। **म्ना अभ्यासे**। **दाण् दाने**। प्रणियच्छति। **ह्वृ कौटिल्ये**। ह्वरति।

---

१– लक्षणानुसन्धानजन्य साधुत्व प्रतिपत्तिविषयं लाक्षणिकम्, प्रतिपदोक्तं तु साक्षादुच्चरितम्, यथा पा रक्षण इति धातुः।

**ऋतश्च (१) संयोगादेर्गुणः ७।४।१०**

ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि। उपधाया वृद्धिः। जह्वार। जह्वरतुः। जह्वरुः जह्वर्थ। जह्वरथुः। जह्वर। जह्वार। जह्वर। जह्वरिव। जह्वरिम। ह्वर्ता।

**ऋद्धनो स्ये ७।२।७०**

ऋतोहन्तेश्च स्यस्य इट्। ह्वरिष्यति ह्वरतु अह्वरत्। ह्वरेत्।

**गुणोऽर्तिसंयोगाद्योः ७।४।२९**

अर्तेः संयोगादेर्ऋदन्तस्य च गुणो यकि यादावार्धधातुके लिङि च। ह्वर्यात्। अह्वार्षीत्। अह्वरिष्यत्। **स्वृ शब्दोपतापयोः**। स्वरति। स्वरतीति वेट्। सस्वरिथ। सस्वर्थ। वमयोस्तु परमपि स्वरत्यादिविकल्पं वाधित्वा पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्याच्छ्र्युकः कितीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। सस्वरिव। सस्वरिम। परत्वादृद्धनोरिति नित्यमिट्। स्वरिष्यति।

**स्मृ चिन्तायाम**। स्मरति। **ह्वृ संवरणे**। ह्वरति। **सृ गतौ**। क्रादित्वान्नेट्। ससर्थ। ससृव ससृम।

**रिङ शयग्लिङक्षुः ७।४।२८**

शे यकि यादावार्धधातुके लिङि च ऋतो रिङ। रीङि प्रकृते रिङविधिसामर्थ्यान्न दीर्घः। (२) स्रियात्। असार्षीत्। **शीघृ गतौ** तु पाघ्रेति। शिति धौरादेशः। धावति। **कृ घृ सेचने**। **ध्वृ हूर्च्छने**। ध्वरति। **दृशिर् प्रेक्षणे**। पश्यति।

**विभाषा सृजिदृशोः ७।१।१६**

आभ्यां थल इड् वा।

**सृजिदृशोर्झल्यमकिति ६।१।५८**

अनयोरमागमः स्याज्झलादावकिति। दद्रष्ठ। ददर्शिथ।

**षढोः कः सि ८।२।४१**

द्रक्ष्यति। दृश्यात्। इरित्वादङ वा।

---

(१) इह तपरकरणं स्पष्टप्रतिपत्त्यर्थम्, स्तॄञ् इत्यादेर्लिटि तस्तरतुरित्यादौ ऋच्छत्युताम् इति गुणस्य जायमानत्वात्।

(२) अकृत् सार्वधातुकयोर्दीर्घ इति दीर्घः प्राप्तः। रीङि प्रकृते रिङविधिसामर्थ्यान्नदीर्घः। रिङग्रहणं सामर्थ्याद्दीर्घं प्रतिषेधति।

**ऋदृशोऽङि गुणः** (१) ७।४।१६

अवर्शत् ।

**न दृशः** ३।१।४७

च्लेवक्ष्यमाणःक्सो न । अद्राक्षीत् । अद्रक्ष्यत्। **श्रु श्रवणे ।**

**श्रुवः श्रृ च** ३।१।७४

श्रुवः श्रृ आदेशः श्नुप्रत्ययश्च कर्तरि सार्वधातुके । श्रृणोति ।

**सार्वधातुकमपित्** १।३।४

अपित्सार्वधातुकं ङिद्वत् स्यात् । श्रृणुतः ।

**हुश्नुवोः सार्वधातुके** ६।४।८७

जुहोतेः श्नुप्रत्ययान्तस्यानेकाचो ऽङ्गस्यासंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुक । श्रृण्वन्ति । श्रृणोषि । श्रृणुथः । श्रृणुथ। श्रृणोमि (२) ।

**लोपश्चास्यान्यतनस्यां म्वोः** ६।४।१०७

असंयोगप्रपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः । श्रृण्वः श्रृणुवः । श्रृण्मः । श्रृणुमः शुश्राव शुश्रुवतुः शुश्रुवुः शुश्रोथ । शुश्रुवथुः । शुश्रुव । शुश्राव। शुश्राव । शुश्रुव । शुश्रुव । शुश्रुम । श्रोता । श्रोष्यति । श्रृणोतु । श्रृणुतात् । श्रृणुताम् । श्रृण्वन्तु ।

**उतश्चप्रयादसंयोगपूर्वात्** ६।४।१०६

असंयोगपूर्वात्प्रत्ययोतो हेर्लुक् । श्रृणु । श्रृणुतम् । श्रृणुत । गुणावादेशौ । श्रृणवानि । श्रृणवाव । श्रृणवाम । अश्रृणोत् अश्रृणुताम् । अश्रृण्वन् । अश्रृणोः । सश्रृणुतम् । अश्रृणुत । अश्रृणवम् । अश्रृण्व । अश्रृणुव। अश्रृण्म। अश्रृणुम। श्रृणुयात।क्षृणुयाताम्।

**उस्यपदान्तात्** ६।१।९६

अपदान्तादवर्णादुसि पररूपमेकादेशः स्यात । श्रृणुयुः । श्रृणुयाः। श्रृणुयातम्। श्रृणुयात । श्रृणुयाव । श्रृणुयाम ।श्रूयात् । अश्रौषीत् । अश्रोष्यत् । **गम्लृ सृप्लृ गतौ ।**

**इषुगमियमां छः** ७।३।७७

शिति । गच्छति । जगाम ।

---

(१) अङि ङित्वादप्राप्तो गुणोऽनेन विधीयते।

(२) 'लोपश्चास्यान्यतरस्यां म्वोः' इति सूत्रं बाधित्वा परत्वात, गुणः ।

**गमहनजनखनघसां लोपःक्ङित्यनङि ६।४।९८**

एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । जग्मतुः । जग्मुः। जगमिथ । जगन्थ । जग्मथुः । जग्म । जगाम । जगम जग्मिव (१) । जग्मिम । गन्ता ।

**गमेरिट् परस्मैपदेषु ७।२।५८**

गमेः सादेरार्धधातुकस्येट् परस्मैपदेषु । गमिष्यति । गच्छतु । अगच्छत् । गम्यात् ।

**पुषादिद्युताद्यॢदितः परस्मैपदेषु ।३।१।५५**

श्यन्विकरणपुषादेर्द्युतादेॢदितश्च परस्य च्लेरङ परस्मैपदेषु । अगमत् । अगमिष्यत्। सर्पति ।

**अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ।६।१।५९**

उपदेशऽनुदात्तो य ऋदुपधस्तस्याम्वा झलादावकिति । स्रप्ता । असृपत । ञिक्ष्विदा । अव्यक्ते शब्दे । क्ष्वेदति । **यभ मैथुने** । यभति । वेट् । येभिथ ।

**झषस्तथोर्धो ऽधः ८।२।४०**

झषपरयोस्तथयोर्धः स्यात् न तु दधातेः । ययब्ध । यब्धा । **णम प्रह्वत्वे शब्दे च** । नेमिथ । ननन्थ । नन्ता । नंस्यति । अनंसीत् । अनंसिष्टाम् । **त्यज हानौ** । त्यजति । तत्याज । तत्यजिथ । तत्यक्थ । त्यक्ता । अत्याक्षीत् । अत्याक्ताम् । अत्यक्षत् । **अक्षू व्याप्तौ** ।

**अक्षोऽन्यतरस्याम् ३।१।७५**

श्नुर्वा स्यात्कर्तरि सार्वधातुके । पक्षे शप् । अक्ष्णोति । अक्षति । आनक्ष । आनक्षिथ । आनष्ट । अक्षिता । अष्टा । अक्षिष्यति । स्कोरिति सलोपः ।

**षढोः कः सि ८।२।४१**

अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्णुयाताम् । अक्ष्णुयुः । अक्ष्यात् । आक्षीत् । आक्षिष्टाम् । **तक्षू त्वक्षू तनूकरणे** ।

**तनूकरणे तक्षः ३।१।७६**

श्नुर्वा शब्विषये । तक्ष्णोति तक्षति वा काष्टम् । ततक्ष । ततक्षिथ । ततष्ठ । अतक्षीत् ।

---

(१) वमयोः क्रादिनियमान्नित्यमिट् ।

अतक्षिष्टाम् (१)। अताक्षीत्। अताष्टाम्। तनूकरणे किम्। वाग्भिः संतक्षति। भर्त्सयतीत्यर्थः। **रक्ष पालने**। रक्षति। **णिक्ष चुम्बने**। प्रणिक्षति। **वक्ष रोषे**। संघात इत्येके।

वक्षति। **मृक्ष संघाते**। मक्ष इत्येके। **तक्ष त्वचने** त्वचनं संवरणम् त्वचो ग्रहणञ्च। पक्ष परिग्रह इत्येके। **सूर्क्ष आदरे**। सुसूर्क्ष। **काक्षि वाक्षि माक्षि काङ्क्षायाम्**। **द्राक्षि ध्राक्षि ध्वाक्षि घोरवाशिते च**। **चूष पाने**। **तूष तुष्टौ**। **पूष वृद्धौ**। **मूष स्तेये**। **लूष रूष भूषायाम्**। **शूष प्रसवे**। **यूष हिंसायाम्**। **जूष च**। **भूष अलङ्कारे**। **जि जये**। जयति।

### सन्लिटोर्जेः ७।३।५७

संल्लिण्निमित्तादभ्यासात्परस्य जेः कुत्वम्। जिगाय। जिग्यतुः। जिगयिथ। जिग्येथ। **जीव प्राणधारणे**। जीवति। **पीव मीव तीव णीव स्थौल्ये**। पीवति। पिपीव। **मुर्वी बन्धने**।

### उपधायां च ८।२।७८

धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात्। मूर्वति। **पूर्व पर्व मर्व पूरणे**। पूर्वति। पर्वति। मर्वति। **चर्व अदने**। चर्वति। **कष खष शिष जष झष शष चष मष रुष रिष हिंसार्थाः**। शेषति। शिशेष। शेष्टा।

### शल इगुपधादनिटः क्सः ३।१।४५

इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः। अशिक्षत्।

### तीषसहलुभरुषरिषः ७।२।४८

इच्छत्यादेः परस्य तादेरार्धधातुकस्येड् वा। रोषिता। रोष्टा। **भष भर्त्सने**। इह भर्त्सनं श्वरवः॥ **पुष पुष्टौ**। पोषिता। अनुदात्तेषु पुष्यति श्यना निर्देशादयमुदात्तः। अङ्विधौ दैवादिकस्य ग्रहणात् नाङ। अपोषीत्। **श्रिषु श्लिषु प्रुषू प्लुषु दाहे**। श्रेषति। श्लेषति। प्रोषति। प्लोषति।

## ॥ इति परस्मैपदिनः ॥

---

(१) ऊदित्वाद् वेट्। इट्पक्षे नेटीति वृद्धिनिषेधः। अनिट् पक्षेतु वृद्धिर्भवत्येव।

## अभ्यासः

**प्रश्न १. दशसु लकारेषु कतमो लकारश्छन्दस्येव प्रयुज्यते**

उ०—"छन्दसि लेट्" इतिसूत्रात् लकारेषु पञ्चमो लेट्लकारश्छन्दस्येव प्रयुज्यते यथा–पत् धातोः "लिङर्थे लेट्" इति कर्तरि लेटि लस्य तिपि इकारलोपाभावे सिपोऽभावे च" लेटोऽडाटौ" इति आटि पताति=पतेदित्यर्थः ।

**प्रश्न २. सकर्मकाणामकर्मकाणां च धातूनाम्परिचयो देयः**

उ०— धातोरर्थः फलव्यापारौस्तः । फलाश्रयतां कर्मणि व्यापाराश्रयता च कर्तरि वर्तते । यस्य धातोः फलाश्रयव्यापाराश्रयौ भिन्नौस्तः, तादृशो धातुः सकर्मकतामेति । यथा– भक्तो हरिं भजतीत्यत्र भज् धातोःफलाश्रयता हरौ व्यापाराश्रयता च भक्ते । अनया रीत्या फलाश्रयव्यापाराश्रययोर्भिन्नतया भज् धातोः सकर्मकत्वं सङ्गच्छते । यस्य धातोः फलव्यापारयो-रेकाश्रयता तादृशोधातुरकर्मकतामेति । यथा–बालकः स्वपितीत्यत्र फलाश्रयता व्यापाराश्रयता च बालक एव । अनया रीत्या स्वप् धातोरकर्मकत्वमपि सङ्गच्छते ।

**प्रश्न ३. आत्मनेपदभाजां धातूनां परिचयो देयः**

उ०— अनुदात्तेद्भ्य उपदेशे ये धातवो ङितस्तदन्तेभ्यश्च धातुभ्यो विहितेषु लकारेषु आत्मनेपदसंज्ञिनस्तङादय आदिश्यन्ते । उदाहरणं चानुदात्तेतां यथा–एधते । वर्धते । अयते । एध वृद्धौ ।वृधु वर्धने । अय गतौ । ङितामुदाहरणं यथा–शेते । मयते । दीयते । शीङ स्वप्ने । मेङ प्रणिदाने । दीङ क्षये । इत्यादयः ।

**प्रश्न ४. भवामि, इत्यस्य सिद्धिपथं दर्शयत**

उ०—सत्तार्थकादकर्मकाद् भू धातोः "वर्तमाने लट" इति कर्तरि लटि लस्य उत्तमपुरुषस्यै-कवचने मिपि "तिङ शित्सार्वधातुकम्" इति सार्वधातुकत्वे "कर्तरि शप्" इति शपि शपो-ऽकारस्यापि सार्वधातुकत्वे "सार्वधातुकार्धधातुकयोः" इति गुणेऽवादेशे भव + मि इति जातेऽङ्गसंज्ञाविधायके सूत्रे तदादिग्रहणमहिम्ना विकरणविशिष्टभव इत्यास्यापि, अङ्गतया "अतो दीर्घो यञि" इति दीर्घे भवामि इति रूपम् ।

**प्रश्न ५. बभूविथ, इत्यस्य प्रक्रियां दर्शयत**

उ०— भू धातोः "परोक्षे लिट्" इति कर्तरि लिटि लस्य मध्यमपुरुषैकवचने सिपि सार्व-धातुकसंज्ञां प्रबाध्य "लिट् च" इति आर्धधातुकत्वे परस्मैपदानामिति थलि स्थानिवद्भावमादाय "आर्धधातुकस्येड्वलादेः" इति इडागमे "भुवोवुग्लुङलिटोः" इति वुगागमे भूव् इ थ इति जाते "लिटि धातोरनभ्यासस्य" इति भूव् इत्यस्य द्वित्वे "पूर्वोऽभ्यासः" इति अभ्यासत्वे "ह्रस्वः इति ह्रस्वे "भवतेरः" इति अभ्यासोकारस्याकारे "अभ्यासे चर्चः" इति जश्त्वे बभूविथ इति रूपम् ।

प्रश्न ६. सेधिता इत्यस्य साधुत्वं दर्शयत

उ०– गत्यर्थकात् षिध् धातोः "धात्वादेः षः सः" इति सत्वे "अनद्यतने लुट्" इति कर्तरि लुटि लस्य प्रथमपुरुषैकचने तिपि सार्वधातुकसंज्ञापूर्वकं शपं बाधित्वा "स्यतासी लृलुटोः" इति तासि प्रत्यये "आर्धधातुकं शेषः" इति आर्धधातुकत्वे, इडागमे लघूपधगुणे "लुट–प्रथमस्य डारौरसः" इति तेडादेशेऽनुबन्धत्लोपे डित्याट्टिलोपे वर्णसम्मेलने सेधिता इति रूपम् ।

प्रश्न. ७. गोपायाञ्चक्रतुः इत्यस्य साधुत्वं वर्णयत

उ०– गुप् धातो "गुपू धूप. . . ." इति नित्ये आय प्रत्यये, प्राप्ते तं प्रबाध्य "आयादय आर्धधातुके वा" इति पाक्षिके आय प्रत्यये, आर्धधातुकत्वे लघूपधगुणे गोपाय इति जाते "सनाद्यन्ता धातवः" इति धातुत्वाल्लिटि "कास्यनेका च आम्वक्तव्य" इति आमि प्रत्यये 'अतो लोपः" इत्यल्लोपे "आमः" इति लिटो लुकि लिट्परकृञ्नः प्रयोगे लिटस्तसोऽतुसि गोपायाम् कृ अतुस्, इति जाते द्वित्वापेक्षया परत्वाद् यणि प्राप्ते "द्विर्वचनेऽचि" इति तन्निषेधे कृते द्वित्वेऽभ्यासत्वे "उरत्" इति अत्वेरपरत्वे हलादिशेषे रलोपे "कुहोश्चुः" इति चुत्वेऽनुस्वारे परसवर्णे यणि रुत्वे विसर्गे च गोपायाञ्चक्रतुः, इति रूपम् ।

प्रश्न ८. अजन्तोऽकारवान्वायस्तास्यनिट् थलिवेडयम् ।

ऋदन्त ईदृङ नित्यानिट् क्राद्यन्यो लिटिसेड्भवेत् ॥ इति कारिकाऽऽशयं दर्शयत

उ०– यो धातुः ऋदन्तभिन्नोऽजन्तो ह्रस्वाकारवान् वा तासौ नित्यानिट् सोऽयं थलि विकल्पितेट्क इति। ईदृक्, इत्यस्य तासौ नित्यानिडित्यर्थः । यःऋदन्तस्तासौ नित्यानिट् स थलि नित्यानिडित्यर्थः । अचस्तास्वत्, इति पाणिनिमते "ऋतोभारद्वाजस्य" इति भारद्वाजमतेऽपि तस्य अनिट्कत्वादितिभावः। "क्राद्यन्य" इति क्राद्यष्टभ्योऽन्यो धातुः, लिटि नित्यं सेडित्यर्थः क्राद्यष्टभ्य एव परस्य लिटि नेडिति "कृ सृ भृ वृ" इति सूत्रेण नियमितत्वात् ।

प्रश्न ९. पेयात्, इत्यस्य साधुत्वं विधेयम्

उ०– पानार्थकात् पा धातोः "आशिषि लिङलोटौ इति" कर्तरि लिङि लस्य तिपि सार्वधातुक-संज्ञां प्रबाध्य "लिङाशिषि" इति आर्धधातुकत्वे यासुटि कित्वे च जाते पायास्ति इतिस्थिते "इतश्च" इति तेरिकारलोपे "स्कोरितिरसलोपे "एर्लिङि" इति पकाराकारस्यैत्वे पेयात्, इति रूपम् ।

प्रश्न १०. अधुः, इत्यस्य सिद्धिप्रकारो दर्शनीयः

उ०– पानार्थकाद् धेट् धातोः कर्तरि लुङि अङ्गसंज्ञापूर्वकेऽटि लस्य प्रथमपुरुष बहु-वचने झौ सार्वधातुकत्वे प्राप्तं शपं प्रबाध्य च्लौ "विभाषाधेट्श्व्योः" इति पाक्षिके चङि

"चङीति द्वित्वेऽभ्यासादिकार्ये "आतोलोप इटि च" इति आकारलोपे झेरन्तादेशे "इतश्चेतीकरा लोपे संयोगान्त लोपे अदधन्, पक्षे सिचि "विभाषा घ्रा–धेट् – शा – च्छासः" इति पाक्षिके सिचो लुकि "आतः" इति झेर्जुसि "उस्य पदान्तात्" इति पररूपे, अधु, इति लुगभावे 'यमरमनमातामिति सकि सिचः, इटि च अधासिषुः, इति रूपत्रयम् ।

**प्रश्ना ११. ह्वरिष्यति, इत्यस्य साधुत्वं वर्णयत**

उ०—कौटिल्यार्थकाद् ह्वृ धातोः कर्तरि लृटि लस्य तिपि सार्वधातुकसंज्ञापूर्वकं शपं प्रबाध्य "स्यतासी लृलुटोः" इति स्य प्रत्यये आर्धधातुकत्वे "आर्धधातुकस्येड्वलादेः" इति प्राप्तस्य, इडागमस्य "एकाच उपदेशे ऽनुदात्तादिति निषेधे प्राप्ते तं प्रबाध्य "ऋद्धनोः स्ये" इति इडागमे गुणे षत्वे च ह्वरिष्यति।

**प्रश्न १२. ददृशतुः, इत्यस्य सिद्धिः कार्या**

उ०—प्रेक्षणार्थकाद् दृश् धातोः कर्तरि लिटि दृश् ल् इति स्थिते "ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन" इति कित्वे लस्य तसि सार्वधातुकसंज्ञां प्रबाध्य लिट् चेति, आर्धधातुकत्वेऽतुसि प्राप्तस्य लघूपधगुणस्य क्ङिति चेति निषेधे द्वित्वेऽभ्यासादिकार्ये ददृशतुः, इति रूपम् ।

**प्रश्न १३. शृणवानि, इत्यस्य साधनप्रक्रियां दर्शयत**

उ०—श्रु धातोः कर्तरि लोटि लस्य मिपि सार्वधातुकसंज्ञापूर्वक शपं बाधित्वा "श्रुवः शृच" इति श्नु प्रत्यये श्रृ आदेशे च "मेर्निः" इति न्यादेशे "आडुत्तमस्यपिच्च" इति आटि गुणेऽवादेशे श्नु प्रत्ययस्य ङित्वात् श्रृ इत्यस्य गुणनिषेधे णत्वे च श्रृणवानि, इति रूपम् ।

**प्रश्न १४. अगच्छन्, इति प्रयोगं साधयत**

उ०—गम् धातोः कर्तरि "अनद्यतने लङ" इति लङि, अडागमे लस्य झौ सार्वधातुकसंज्ञायां शपि "इषु – गमि – यमां छः' इति छादेशे तुकि श्चुत्वे झेरन्तादेशे "इतश्चेति" इकारलोपे संयोगान्त लोपे च अगच्छन्, इति रूपम् ।

**प्रश्न १५. अशिक्षत्, इति रूपं साधु वर्णयत**

उ०—शिष् धातोः कर्तरि लुङि अडागमे लस्य तिपि सार्वधातुकसंज्ञापूर्वकं शपं प्रबाध्य च्लौ प्राप्तं सिचं प्रबाध्य "शल इगुपधादनिटः क्सः" इति च्लेः क्सादेशेऽनुबन्धलोपे प्राप्तस्य गुणस्य "क्ङिति चेति निषेधे अशिष् स ति इति जाते "षढोः कः सि" इति षस्य कत्वे सस्य षत्वे "क–ष संयोगे क्षः" इति क्षत्वे अशिक्षत्, इति रूपम् ।

# कर्तृवाच्ये वाक्यरचना विधिः

धातूनां प्रकारद्वयं भवति, सकर्मकोऽकर्मकश्च । सकर्मकधातुभ्यः कर्मणि कर्तरि च प्रत्यया भवन्ति । अकर्मकेभ्यो धातुभ्यो भावे कर्तरि च प्रत्यया भवन्ति । कर्मणि भावे च विहितप्रत्ययानां विवेचनं पश्चाद् भावकर्मप्रकरणे विधास्यते । कर्तरि प्रत्यये कृते कर्तुरुक्तत्वेन उक्ते कर्तरि, कर्तरि प्रथमा भवति । कर्तरि कृतेन प्रत्ययेन कर्मणोऽनुक्तत्वात् अनुक्तकर्मणि, कर्मणि द्वितीया भवति । यथा खाद् धातोः कर्तरि लटि तिपि खादति इति भवति । अस्याः क्रियाया प्रयोगे कर्तुरुक्तत्वेन उक्ते रामरूपे कर्तरि प्रथमा भवति। तथा च कर्तृरुक्तत्वेन कर्मणोऽनुक्तत्वेन अनुक्ते भक्तरूपे कर्मणि द्वितीया भवति । कर्तृक्रिययोः सामानाधिकरण्यं तु सर्वत्र कर्तव्यमेव । अनेन विधिना खादति क्रियायाः प्रयोगे 'रामो भक्तं खादति' एतादृशी वाक्यरचना जायते । यद्यत्र अकर्मकधातुभ्यः प्रत्ययाः कृताः स्युस्तदाऽपि कर्तरि प्रथमा एव भवति। यथा शीङ धातोः कर्तरि लटि ते कृते शेते इति भवति। अस्या क्रियायाः प्रयोगे पूर्वोक्त विधिना कर्तरि प्रथमा भवति । तेन शेते क्रियायाः प्रयोगे– रामः शेते, हरिः शेते, रमा शेते एतादृश्यो वाक्यरचना जायन्ते । कर्तृवाच्ये वाक्यरचनाप्रकारोऽधःस्थाया तालिकयाऽपि स्पष्टीक्रियते–

## धातु तालिका




## प्रदत्तक्रियापदैर्वाक्यरचनाप्रकारः

**प्रश्न** पठति, हसति, पास्यति, जगाम, अपश्यन् एतानि क्रियापदानि प्रयुज्य पृथक् पञ्च वाक्यानि रचयत–

**उत्तरम्**

(क) श्यामो व्याकरणं पठति ।

(ख) सा बालिका हसति ।

(ग) तृषितो जनो जलम् पास्यति ।

(घ) रामश्चतुर्दशभ्यो वर्षेभ्यो वनं जगाम ।

(ङ) पर्यटकाः पशुपतिमन्दिरमपश्यन् ।

## वाक्यसंशोधनप्रकारः

**प्रश्नः– अधस्तनवाक्यानि सकारणं संशोधयत ।**

(क) यत्र अहमासम् तत्र भवान् मा अभूत् ।
(ख) तौ दम्पती नगरं विषेधत ।
(ग) तदा वयं स्वच्छं जलमपिबामः ।
(घ) तौ सदुपदेशं न श्रृणोतः ।
(ङ) शिशवो दुग्धमपान् ।

**उत्तरम्–** (क) 'न माङ्योगे' इति सूत्रेण माङ्योगे अडागमस्य निषेधात् 'मा अभूत्' इति न भवति, मा भूत् इति भवति तेन शुद्धं वाक्यम्–

(१) यत्र अहमासम् , तत्र भवान् मा भूत् ।

(ख) 'सेधतेर्गतौ' इति सूत्रेण गत्यर्थस्य सेधते सस्य षत्व निषेधात् 'विषेधतः' इति न भवति । 'विसेधतः' इति भवति तेन शुद्धं वाक्यम्–

(२) तौ दम्पती नगरं विसेधतः ।

(ग) 'नित्यं ङितः' इति सूत्रेण सकारान्तस्य ङिदुत्तमस्य लोपे प्राप्ते 'अलोऽन्त्यस्ये'ति सकारमात्रस्य लोपात् 'अपिबामः इति न भवति परन्तु 'अपिबाम' इति भवति तेन शुद्धं वाक्यम्–

(३) तदा वयं स्वच्छं जलमपिबाम ।

(घ) 'सार्वधातुकमपित्' इति सूत्रेण अपित्सार्वधातुकस्य ङिद्वद्भावात् गुणनिषेधेन 'श्रृणोतः' इति न भवति 'श्रृणुतः' इति भवति तेन शुद्धं वाक्यम्–

(४) तौ सदुपदेशं न श्रृणुतः ।

(ङ) पा धातोर्लुङि झौ 'आतः' इति झेर्जुसि 'उस्य पदान्तात्' इति पररूपे च 'अपुः' इति जायते तेन 'अपान्' इति अशुद्धं पदम् । अतः शुद्धं वाक्याम्–

(५) शिशवो दुग्धमपुः ।

### अभ्यासार्थं प्रश्नाः

(१) कीदृशो धातोर्भावे प्रत्ययो भवति ?
(२) लुटो लृटश्च प्रवृत्तिस्थलं स्पष्टयत ।
(३) 'भव' इत्यस्य साधनप्रक्रियां सम्यग् दर्शयत ।

(४) विधिलिङ केषु अर्थेषु प्रयुज्यते ?
(५) माङिङति कथमुपपदम् ?
(६) माङ्युपपदाद् धातोर्विधीयमानो लकारः कः ?
(७) कीदृशे भूतेऽर्थे लुङलङौ प्रयुज्येते ?
(८) संहिताया नित्यानित्यत्वे को नियमः ?
(९) के तेऽजन्ताः सेड्धातवः ?
(१०). केषु लकारेषु परेषु केन सूत्रेण 'पा' धातोस्थाने पिबादेशो विधीयते ।
(११) बभूव, भूयात्, अभूवन्, आत, सिषिधतुः, अगादीत्, आनर्च, अश्च्युतत्, ववनतुः, अकटीत्, गोपायाञ्चकार, अगोपीत्, क्षीयात्, क्राम्यति, अचमीत्, अपुः, ग्लेयात्, अग्लासीत्, धेहि, जह्वार, स्त्रियात्, दद्रष्ठ, श्रृणुतः, श्रृण्वः, जग्मतुः, अगमत्, अक्ष्यति, जिगाय, अशिक्षत्, रोषिता एषां सिद्धिपथं सम्यग् दर्शयत ।

(१२) **सकारणं संशोध्यन्तामधस्तनवाक्यनां क्रियापदानि**

(क) महात्मानो नेपालदेशं पुण्यक्षेत्रमिति प्रनिगदन्ति ।
(ख) किं भो अमेरिकामपि भवान् असेधीत् ?
(ग) निरक्षरोऽपि पठिष्यति चेद् विद्वान् भविष्यति ।
(घ) वयमवश्यमेव विराटनगरं गम्स्यामः ।
(ङ) पुरा हिमालये बहवो मुनयस्तपांसि ततपुः ।
(च) श्वोऽहं पशुपतिं व्रजिष्यामि ।
(छ) यूयं सम्यगविचार्यैव भूमौ क्रमथ ।
(ज) एकदा रामलक्ष्मणौ असम्भवमपि सुवर्णमृगं ददर्शतुः ।
(झ) पूजकाः पूजनात्पूर्वमाचमन्ति ।
(ञ) वयं कदाचित्तु पुराणान्यपि श्रिणुयाम ।

(१३) बभूवुः, अर्चन्ति, अगौप्स्वः, नन्दिष्यथः, पिबेत्, गम्यात्, श्रृणवानि, तप्तारौ, अदर्शतम्, एतानि क्रियापदानि प्रयुज्य पृथक् पृथग् वाक्यानि निर्मात ।

# अथात्मनेपदिनः

एध वृध्दौ ॥

**टित आत्मनेपदानां टेरे ३।४७९**

टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ।

**आतोङितः ७।२।८१।**

अतः परस्य ङितामात इय् स्यात् । एधेते । एधन्ते ।

**थासः से ३।४।८०**

टितो लस्य । एधसे । एधेथे । एधध्वे । एधे । एधावहे । एधामहे ।

**इजादेश्चगुरुमतोऽनृच्छः ३।१।३६**

इजादिर्योधातुर्गुरुमानृच्छत्यन्यस्तत आम् लिटि ॥

**आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य १।३।६३**

आम्प्रकृत्यातुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदम्, स्यात् ॥

**लिटस्तझयोरेशिरेच् ३।४।८१**

एकारोच्चारणं ज्ञापकम्– तङादेशानां टेरेत्वं नेति । तेन डारौरसां न ।

एधांचक्रे। एधांचक्राते । एधांचक्रिरे । एधांचकृषे । एधांचक्राथे ।

**इणः षीध्वंलुङलिटां धोऽङ्गात् ८।३।७८**

इण्णन्तादङ्गात्परेषां षी (२) ध्वंलुङलिटां धस्य ढः । एधांचकृढ्वे ।

एधांचक्रे । एधांचकृवहे । एधांचकृमहे । एधांबभूव । एधामास । अनुप्रयोगसामर्थ्यात्, अस्तेर्भूभावो न । अन्यथा हि कश्चानु प्रयुज्यत इति कृभ्वित वा ब्रूयात् । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ।

**धिच ८।२।२५**

धादौ (३) प्रत्यये सलोपः । एधिताध्वे ।

---

(१) एशिति शकारकरणमकारविशिष्टतकारस्यादेशत्वाय ।

(२) षीध्वमिति षकारोच्चारणं तु ब्रुवीध्वमित्यत्र एकदेशविकृतन्यायेन सीध्वमः सत्वेन प्राप्त ढत्ववारणाय ।

(३) प्रत्यय इति । तेन पयो धावतीत्यादौ न सलोपः ।

## ह एति ७।४।५२

तासस्त्योः सस्य हः स्यात् । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ।

## आमेतः ३।४।९०

लोट एत आम् । एधताम् । एधेताम् । एधन्ताम् ।

## सवाभ्यां वामौ ३।४।९१

सवाभ्यां परस्य लोडेत क्रमाद्वामौ स्तः । यधस्व (१)। एधेथाम् । एधध्वम् ।

## एत ऐ ३।४।९३

लोडुत्तमस्य एत ऐ स्यात् । एधामहै एधै । एधावहै । 'आटश्च' ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ।

## लिङः सीयुट् ३।४।१०२

लिङः सलोपोऽनन्त्यस्येति सलोपः ।

## लोपो व्योर्वलि ६।१।६६

(२) एधेत । एधेयाताम् ।

## झस्य रन् ३।४।५०

लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ।

## इटोऽत् ३।४।१०६

लिङादेशस्य इटोऽत् स्यात् । एधेय । एधेवहि । एधेमहि ।

## सुट्तिथोः ३।४।१०७

लिङस्तथोः सुट् । (३) यलोपः । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् (४) । एधिषीय । एधिषीवहि । एधिषीमहि । ऐधिष्ट । ऐधिषाताम् ।

---

(१) 'एधसे' इति सिद्धे एकारस्य वत्वम् ।

(२) 'लोपो व्योर्वलि' इति यलोपः ।

(३) सीयुटो यकारस्य लोपः ।

(४) एधिषीध्वम्, अत्र 'ध्वम्' इत्यस्य इणः परत्वेऽपि अङ्गस्य—इणन्तत्वाभावात् 'इणः षीध्वं लुङ. . .' इति ढत्वंन ।

**आत्मनेपदेष्वनतः ७।१।५**

अनकारात्परस्यात्मनेपदेषु झस्याऽत् स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् ऐधिढ्वम् । ऐधिषि । ऐधिष्वहि। ऐधिष्महि । ऐधिष्यत। ऐधिष्येताम् । ऐधिष्यन्त। ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि। **कमु कान्तौ** ।

**कमेर्णिङ ३।१।३०**

स्वार्थे । कामयते ।

**अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।५४**

(१) एषुणेरय्। कामयाञ्चक्रे। आयादय इति वा णिङ। चकमे। चकमाते। चकमिरे। चकमिषे। चकमाथे। चकमिध्वे। चकमे। चकमिवहे। चकमिमहे। कामयिता, कमिता। कामयिष्यते। कमिष्यते। कामयताम्। अकामयत। कामयेत। कामयिषीष्ट। कमिषीष्ट।

**णि–श्रि–द्रु–स्रुभ्यः कर्तरिचङ ३।१।४८**

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ कर्त्रर्थे लुङि । अ काम् इ अ त इति स्थिते–

**णेरनिटि** (२) **६।४।५१**

अनिडादावार्धधातुके परे णेर्लोपः ।

**णौ चङ्युपधायाह्रस्वः ७।४।१**

चङपरे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति (३)।

**सन्यतः ७।४।७९**

अभ्यासस्यात इत्सनि ।

**दीर्घोलघोः ७।४।९४**

लघोरभ्यासस्य दीर्घः सन्वद्भावविषये । अचीकमत। णिङभावपक्षे । (**कमेश्च्लेश्चङ–वाच्यः**)। अचकमत (४) । अकामयिष्यत, अकमिष्यत । **भाम क्रोधे** । भामते । बभामे । **क्षमूष् सहने** । क्षमते । चक्षमे । चक्षमिषे, चक्षंसे । चक्षमिवहे । चक्षमिमहे ।

---

(१) आम्, अन्त, आलु, आय्य, इत्नु, इष्णु, इत्येषु णेरयादेशः स्यात्। णिलोपापवादोऽयम् ।

(२) "निरनुबन्धकग्रहणे सामान्यग्रहणम्"। इति न्यायात् णेरिति णिङ–णिचोरुभयोरपि ग्रहणम् ।

(३) णौ अग्लोपो ( णिज्निमित्तकोऽक्प्रत्याहारघटितवर्णलोपः ) यदि न भूतः स्याद् इत्यर्थः । सति–अग्लोपे दीर्घसन्वद्भावौ न भवतः, यथा–अचकथत्, अजहलत्, इत्यादि ।

(४) "चङि" इति द्वित्वम् । अत्र णेरभावात् सन्वद्भावो न, तेन–इत्वं दीर्घश्चापि न।

**म्वोश्च ८।२।६५**

मान्तस्य धातोर्मस्य नः स्या न्म्वोः परयोः । चक्षण्वहे । चक्षण्महे । **गाधृ प्रतिष्ठालिप्स-योर्ग्रन्थे च** । गाधते । **बाधृ लोडने** । लोडनं=प्रतिघातः । बाधते । **नाथृ नाधृ याच्ञोपतापैश्वर्याशिःषु । (आशिषिनाथ इति वाच्यम्)** । अस्याशिष्येवात्मनेपदं स्यात् । नाथते । अन्यत्र नाथति । **दध धारणे** । दधते । **स्कुदि आप्रवणे** । आप्रवणमुत्प्लवनमुद्धरणं च । स्कुन्दते । चुस्कुन्दे । **श्विदि श्वैत्ये** । श्विन्दते । शिश्विन्दे । **वदि अभिवादनस्तुत्योः** । वन्दते । ववन्दे । **भदि कल्याणे सुखेच** । भन्दते । बभन्दे । **मदि स्तुति-मोद-मद स्वप्न-कान्ति गतिषु** । मन्दते । **स्पदि किंचिचलने** । स्पन्दते । पस्पन्दे । **मुद हर्षे** । मोदते । मुमुदे । **उर्द माने क्रीडायां च** । उर्दते । उर्दाञ्चक्रे । **कुर्द खुर्द गुर्द गुद क्रीडायामेव** । कूर्दते (१) । खूर्दते । गूर्दते । गोदते । जुगुदे । **षूद क्षनणे** । सूषूदे । **ह्राद अव्यक्ते शब्दे** । ह्रादते । जह्रादे । **ह्लादि सुखे च** । चादव्यक्ते शब्दे । ह्लादते । जह्लादे । **स्वाद आस्वादने** । स्वादते । **पर्द कुत्सिते शब्दे** । गुदरव इत्यर्थः । पर्दते । पपर्दे । **यती प्रयत्ने** । यतते । येते । **श्रथि शैथिल्ये** । श्रन्थते । **ग्रथि कौटिल्ये** । ग्रन्थते । **कत्थ श्लाघायाम्** । कत्थते । चकत्थे । **श्लोकृ संघाते** । सङ्घातो= ग्रन्थः । सचेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्येऽकर्मको द्वितीये सकर्मकः । श्लोकते । शुश्लोके ।

**शकि शङ्कायाम्** । शङ्कते । शशङ्के । **अकि लक्षणे** । अङ्कते । आनङ्के (२) । **ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ तिकृ तीकृ रघि लघि गत्यर्थाः** । कङ्कते । वङ्कते । श्वङ्कते । गङ्कते । ढौकते । डुढौके (३) । त्रौकते । तुत्रौके । **(सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेध)** ष्वष्कते । षष्वष्के । वस्कते । ववस्के मस्कते । ममस्के । टेकते । टीकते । तेकते । रङ्घते । लङ्घते । **श्लाघृ कत्थने** । श्लाघते । पचि व्यक्तीकरणे । पञ्चते । पपञ्चे । **ऋज गतिस्थानार्जनोपार्जनेषु** । अर्जते । **(नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते)** । आनृजे (४) । **ऋजि भृजि भर्जने** । ऋञ्जाञ्चक्रे । भर्जते । **एजृ भ्रेजृ भ्राजृ दीप्तौ** । एजते । एजाञ्चक्रे । भ्रेजते । बिभ्रेजे । भ्राजते । बभ्राजे । **वेष्ट वेष्टने** । वेष्टते । विवेष्टे । **चेष्ट चेष्टायाम्** । चेष्टते । चिचेष्टे । **स्फुट विकसने** । फोटते । पुस्फुटे । **टुवेपृ कम्पने** । वेपते । **कपि चलने** । कम्पते । **भिक्ष भिक्षायामलाभेलाभे च** । भिक्षते । बिभिक्षे । **दीक्ष मौण्डचेज्योपनयननियम–व्रतादेशेषु** ।

---

(१) उपधायाञ्चेति दीर्घः ।

(२) "तस्मान्नुड् द्विहलः" इति नुट् ।

(३) "एच इग् ह्रस्वादेशे" इति अभ्यासे ह्रस्व उः ।

(४) तेन द्विहल्त्वान्नुट् ।

दीक्षते । दिदीक्षे । **भाष व्यक्तायां वाचि ।** भाषते । बभाषे । **वर्ष स्नेहने ।** वर्षते । ववर्षे । **ईह चेष्टायाम् ।** ईहते । ईहाञ्चक्रे । **गर्ह गल्ह कुत्सायाम् ।** गर्हते । गल्हते । **काशृ दीप्तौ ।** काशते । **ऊह वितर्के** । ऊहते । ऊहाञ्चक्रे । कथम् **अनुक्तमप्यूहति पण्डितोजनः''** इति–(अनुदात्तेत्व-लक्षण मात्मनेपदमनित्यम्) । अनुदात्तेतश्चक्षिङोङित्करणाज्ज्ञापकात् । तेन– (१) उदयति यदि भानुः । (२) स्फायन्निर्मोक सन्धिः' इत्यादि सिद्धमित्याहुः । **अय गतौ ।** अयते ।

**उपसर्गस्यायतौ ८।२।१९**

अयतावुपसर्गस्य रेफस्य लत्वम् । प्लायते । पलायते ।

**दयायासश्च: ३।१।३७**

दय अय आस एभ्य आम्लिटि । अयाञ्चक्रे । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट ।

**विभाषेटः ८।३।७९**

इणः परो य इट् ततः परेषां षीध्वं–लुङ–लिटां धस्य वा ढः । अयिषीढ्वम् । अयिषीध्वम् । आयिष्ट । आयिढ्वम्, आयिध्वम् । आयिष्यत । **द्युत दीप्तौ ।** द्योतते ।

**द्युति स्वाप्योः संप्रसारणम् ७।४।६७**

अभ्यासस्य । दिद्युते । द्योतिता । द्योतिष्यते । द्योतताम् । अद्योतत । द्योतेत । द्योतिषीष्ट ।

**द्युद्भ्यो लुङि १।३।९१**

द्युतादिभ्यः परस्मैपदं वा लुङि । पुषादित्यङ । अद्युतत् । अद्योतिष्ट । अद्योतिष्यत । एवं श्वितावर्णे । **ञिमिदा स्नेहने । ञिष्विदा स्नेहनमोचनयोः ।** मोहनयोरित्येके, ञिक्ष्विदा चेत्येके । **रुच (३) दीप्तावभिप्रीतौ च । घुट परिवर्तने । शुभ दीप्तौ । क्षुभ संचलने ।**

---

(१) उत्पूर्वस्य 'अय' धातोः परस्मैपदे–'उदयति' इति रूपम् ।

(२) स्फायी वृद्धौ–इत्यस्माद् धातोः, अनुदात्तेतोर्लटः शत्रादेशे स्फायन् इति रूपम् ।

(३) रोचते । रुरुचे । (लुङि) अरुचत्, अरोचिष्ट । एवं घोटते । जघुटे । अघुटत् । अघोटिष्ट । एवं लुङि सर्वत्र रूपद्वयम् । शोभते । शुशुभे । क्षोभते । चुक्षुभे । नभते । नेभे । तोभते । तुतुभे । स्रंसते । सस्रंसे । भ्रंसते । बभ्रंसे । ध्वंसते । दध्वंसे । स्रम्भते । सस्रंभे । एषां लुङि परस्मैपदेऽङि 'अनि दिताम्' इति नकारलोपः । अस्रसत् । अभ्रसत् । अध्वसत् । अस्रभत् । विपूर्वकः श्रम्भु धातुर्विश्वासे प्रयुज्यते ।

णभ तुभ हिंसायाम् । सं्सु ध्वंसु भ्रंसु अव स्ंसने । ध्वंसु गतौ च । श्रम्भु विश्वासे । वृतु वर्तने । वर्तते । (ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन) ववृते । वर्तिता ।

**वृद्भ्यः स्य-सनोः १।३।९२**

वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्ये सनि च ।

**न वृद्भ्यश्चतुर्भ्यः ७।२।५९**

वृत्–वृध्–शृध्–स्यन्दूभ्यः सादेरार्धधातुकस्येण्न तङानयोरभावे । वर्त्स्यति, वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवृतत् । अवर्तिष्ट । अवर्त्स्यत्, अवर्तिष्यत । **एवं वृधु वृद्धौ । शृधु शब्दकुत्सायाम्। स्यन्दू प्रसवणे** । स्यन्दते । सस्यन्दे । सस्यन्दिषे, सस्यन्त्से । सस्यन्दिध्वे, सस्यन्ध्वे । स्यन्दिता, स्यन्ता । वृद्भ्यः स्यसनोरितिपरस्मैपदे कृते ऊदिल्लक्षण-मन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहसामर्थ्या न्न वृद्भ्य इति निषेधः । स्यन्त्स्यति । स्यन्दिष्यते, स्यन्त्स्यते । स्यन्देत । स्यन्दिषीष्ट, स्यन्त्सीष्ट । द्युद्भ्यो लुङीति परस्मैपद पक्षेऽङ । नलोपः । अस्यदत् । अस्यन्दिष्ट, अस्यन्त । अस्यन्त्साताम् । अस्यन्त्सत । असन्त्स्यत् । अस्यन्दिष्यत अस्यन्त्स्यत ।

**अनु–वि–पर्यभि–निभ्यः स्यन्दतेरप्राणिषु ८।३।७२**

एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा । अनुष्यन्दते, अनुस्यन्दते वा जलम् । अप्राणिषु किम् ?

अनुस्यन्दते हस्ती । **क्रृपू सामर्थ्ये** ।

**कृपोरोलः ८।२।१८**

कृपः उ इति छेदः । कृपे रेफस्य लः । कृपेॠकारस्यावयवो यो रेफसदृशस्तस्य च लकार-सदृशः स्यात् । कल्पते । चक्लृपिषे, चक्लृप्से (१) । इत्यादि स्यन्दिवत् ।

**लुटि च क्लृपः १।३।९३**

लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा ।

**तासिच क्लृपः ७।२।६०**

क्लृपेः परस्य तासेः सादेरार्धधातुकस्येण्न तङानयोरभावे । कल्प्तासि, कल्पितासे, कल्प्तास । कल्प्स्यति, कल्पिष्यते, कल्प्स्यते । कल्पिषीष्ट ।

---

(१) ऊदित्वाद् वेट् ।

**लिङ्सिचावात्मनेपदेषु १।२।११**

इक्समीपाद्धल: परौ झलादी लिङात्मनेपदपर: सिच्चेत्येतौ कितौ स्त: (१)। क्लृप्सीष्ट। अक्लृपत्। अकल्पिष्ट, अक्लृप्त। अकल्प्स्यत्, अकल्पिष्यत, अकल्प्स्यत। इति द्युतादय:। **दद दाने।** ददते। ददे(२)। ददाते। ददिरे। ददिता। ददिष्यते। ददताम्। अददत। ददेत। ददिषीष्ट। अददिष्ट। अददिष्यत। **त्रपूष् लज्जायाम्।** त्रपते।

**तॄ–फल–भज–त्रपश्च ७।४।१२२**

एषामत एत्वमभ्यासलोपश्च किति लिटि च। त्रेपे। त्रपिता, त्रप्ता। त्रपिष्यते। त्रप्स्यते। त्रपताम्। त्रपेत। त्रपिषीष्ट, त्रप्सीष्ट। अत्रपिष्ट, अत्रप्त(३)। अत्रपिष्यत, अत्रप्स्यत। **घट चेष्टायाम्।** घटते। जघटे। **व्यथ भय संचलनयो:।** व्यथते।

**व्यथो लिटि ७।४।६८**

व्यथेरभ्यासस्य संप्रसारणं स्याल्लिटि। हलादि: शेषापवाद:। विव्यथे। **प्रथ प्रख्याने।** प्रथते। पप्रथे। **प्रस विस्तारे।** प्रसते। **म्रद मर्दने।** **स्खद स्खदने।** स्खदनं=विद्रावणम्। स्खदते। **क्रप कृपायाम्।** क्रपते। **ञित्वरा संभ्रमे।** त्वरते। **टुभ्राजृ टुभ्राशृ टुम्लाशृ दीप्तौ।** भ्राजते।

**फणां च सप्तानाम् ६।४।१२५**

फण, राजृ, भ्राजृ, भ्राशृ, भ्लाशृ, स्यमु, स्वन, एषां वा एत्वाभ्यासलोपौ स्त:। कितिलिटिसेटि-थलि च। भ्रेजे। बभ्राजे। वा भ्राशेति श्यन्वा। भ्राश्यते, भ्राशते। भ्रेशे, बभ्राशे। भ्लाश्यते। भ्लेशे,। बभ्लाशे। **रमु क्रीडायाम्।** रमते। रेमे। रन्ता। **जभी जृभी–गात्र विनामे।**

**रधिजभोरचि ७।१।६१**

नुम्। जम्भते। जजम्भे। जृम्भते। जजृम्भे।

**॥ इत्यात्मनेपदिन: ॥**

---

(१) तेन न गुण:।

(२) 'न शसददवादिगुणानाम्' इति–एत्वाभ्यासलोपयोर्निषेध:।

(३) 'झलो झलि' इति सलोप:।

## अभ्यासः

**प्रश्न. १. एधाञ्चकृढ्वे, इत्यस्य प्रक्रिया दर्शयत**

उ०— वृद्धयर्थकात्, एध धातोः कर्तरि लिटि "इजादेश्च गुरुमतोऽनृच्छः" इति आमि एधाम् ल् इति स्थिते "आमः" इति लिटो लुकि "कृञ्चानु प्रयुज्यते लिटि" इति लिट्परके कृञः प्रयोगे एधाम् कृ ल् इति जाते अनुप्रयुज्यमानात् कृञः परस्य लकारस्य स्थाने, उभयोः पदयोः प्राप्तयोः "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इति, आत्मनेपदत्वे निर्णीते लस्य मध्यमपुरुषबहुवचने ध्वमि द्वित्वेऽभ्यासादिकार्ये एधाम् चकृध्वे इति स्थिते "इणः षीध्वं–लुङलिटां धोऽङ्गात्" इति धस्य ढत्वे अनुस्वारे परसवर्णे च एधाञ्चकृढ्वे, इति रूपम् ।

**प्रश्न २. अचीकमत, इति कया रीत्या सम्पद्यते, इति लिखत**

उ०— "कमेर्णिङ" इति नित्ये णिङि प्राप्ते "आयादय आर्धधातुके वा" इति पाक्षिके णिङि कामि इत्यस्य "सनाद्यन्ता धातवः" इति धातुत्वे कर्तरि लुङि लस्य तादेशेऽडागमे "णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ" इति चङि अकाम् इ अ त इति स्थिते "णेरनिटि" इति णेर्लोपे "णेचङ्युपधाया ह्रस्वः" इति उपधाह्रस्वे "चङि" इति द्वित्वेऽभ्यासादिकार्ये "सन्वल्लघुनिचङ्परेऽनग्लोपे" इति सन्वद्भावे "सन्यतः" इति इत्वे "दीर्घो लघोः" इति दीर्घे–अचीकमत, इति रूपम् पक्षे अचकमत, इति रूपद्वयम् ।

**प्रश्न ३. आनङ्के, इत्यस्य सिद्धिपथं दर्शयत**

उ०— लक्षणार्थकात्, इदित्संज्ञकात् नुमाङ्कितात्, अङ्क् धातोः कर्तरि लिटि लस्यात्मनेपदसंज्ञके तादेशे अङ्क् त इति जाते द्वित्वेऽभ्यासत्वे अ अङ्क त इति जाते पररूपं प्रबाध्य "अत आदेः" इति अभ्यासाकारस्य दीर्घे आ अङ्क त इति जाते "तस्मान्नुड् द्विहलः" इति नुटि "लिटस्तझयोरेशिरेच्" इति तस्य एशादेशे वर्णसम्मेलने आनङ्के, इति रूपम् ।

**प्रश्न ४. क्लृप्सीष्ट, इति प्रयोगं निष्पादयत**

उ०— ऊदित्संज्ञकात् कृप् इत्यस्य " कृपो रोलः" इति लत्वे क्लृप् इत्यस्मात् कर्तरि आशिषि लिङि लस्य तादेशे "लिङःसीयुट्" इति सीयुटि ऊदित्वात् "स्वरति .." इति पाक्षिके इटि "सुट् तिथोः" इति सुटि लघूपधगुणे षत्वे ष्टुत्वे कल्पिषीष्ट इडभावे "लिङसिचावात्मनेपदेषु" इति कित्वे गुणाभावे क्लृप्सीष्ट, इति रूपद्वयम् ।

**प्रश्न ५. भ्रेजे इति कथं सिध्यति लिखत**

उ०— दीप्त्यर्थकाद् भ्राज् धातोः कर्तरि लिटि लस्य तादेशे "असंयोगालिट् कित्" इति कित्वे द्वित्वेऽभ्यासत्वे "फणां च सप्तानाम्" इति पाक्षिके एत्वाभ्यासलोपे तस्य एशादेशे वर्णसम्मेलने भ्रेजे, इति रूपम् । पक्षे बभ्राजे, इति रूपद्वयम् ।

# अथोभयपदिनः

**श्रिञ् सेवायाम्** । श्रयति । श्रयते । शिश्राय । शिश्रियें । श्रयितासि, श्रयितासे । श्रयिष्यति । श्रयिष्यते । श्रयतु, श्रयताम् । अश्रयत् । अश्रयत । श्रयेत् । श्रयेत । श्रीयात् (१) । श्रयिषीष्ट । अशिश्रियत् (२) । अशिश्रियत । अश्रयिष्यत् । अश्रयिष्यत । **भृञ् भरणे** । भरते । बभार । बभ्रतुः । बभ्रुः । बभर्थ (३) । बभृम । बभ्रे । बभृषे । भर्तासि । भर्तासे । भरिष्यति (४) । भरिष्यते । भरतु । भरताम् । अभरत् । अभरत । भरेत् । भरेत । भ्रियात् । (५)

### उश्च १।२।१२

ऋवर्णात्परौ झलादी लिङात्मनेपदपरः सिच्चेत्येतौ कितौस्तः (६) । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् । (७)

### ह्रस्वादङ्गात् ८।२।२७

सिचो लोपो झलि । अभृत । अभरिष्यत् । अभरिष्यत । **हृञ् हरणे** । हरति । हरते । जहार । जह्रतुः । जह्रुः । जहर्थ । जह्रिव । जह्रिम । जह्रे । जह्रिषे । हर्तासि । हर्तासे । हरिष्यति । हरिष्येत । **धृञ् धारणे** । धरति । धरते । **णीञ् प्रापणे** । नयति, नयते । **डुपचष् पाके** । पचति । पचते । पपाच । पेचिथ, पपक्थ । पेचे । पक्तासि । पक्तासे । पक्ष्यति । पक्ष्यते । **भज सेवायाम्** । भजति । भजते । भेजे । भक्तासि । भक्ष्यति । भक्ष्यते । भजतु । भजताम् । अभाक्षीत् । अभक्त । अभक्षाताम् । **यज देवपूजासंङ्गतिकरणदानेषु** । यजति । यजते ।

### लिट्यभ्यासस्योभयेषाम् ६।१।१७

वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि । (८) इयाज ।

---

(१) श्रीयात्– "अकृत्सार्वधातु ...." इति दीर्घः ।
(२) "णिश्रिद्रुसुभ्यः कर्तरि...." इति चङ, द्वित्वम्, इयङ ।
(३) थलि "कृसृभृ..." इति इण्निषेधः ।
(४) भरिष्यति– "ऋद्धनोः स्ये" इति इट्
(५) "अकृत्सार्व...." इति दीर्घः प्राप्तः, 'रिङ' इति ह्रस्वविधान सामर्थ्यान्न भवति ।
(६) तेन न गुणः ।
(७) अभार्षीत्– "सिचिवृद्धिः" इति वृद्धिः ।
(८) इयाज– ययज् अ अभ्यासस्य संप्रसारणं पूर्वरूपम्, उपधावृद्धिः ।

**वचिस्वपियजादीनांकिति ।६।१।१५**

वचि–स्वप्योर्यजादीनां च संप्रसारणं किति ।

**यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ् इत्यपि ।**
**ह्वेञ् वदी श्वयतिश्चेति यजाद्याः स्युरिमेनव ॥१॥**

ईजतुः (१) । ईजुः । इयजिथ, इयष्ठ (२) । ईजे । यष्टा । यक्ष्यति । यक्ष्यते । यजतु । यजताम् । अयजत् । अयजत । यजेत । इज्यात् । यक्षीष्ट । अयाक्षीत् । अयष्ट । अयक्ष्यत् । अयक्ष्यत । **वह प्रापणे** । वहति । वहते । उवाह । ऊहतुः । ऊहुः । उवहिथ । "झषस्तथोर्धोऽध, ।

**ढोढे लोपः ८।३।१३**

**सहिवहोरोदवर्णस्य ६।३।११२**

ढलोपे । उवोढ । ऊहे । वोढा । वक्ष्यति । वक्ष्यते । वहतु । उह्यात् । वक्षीष्ट ।

अवाक्षीत् । अवोढाम् । अवाक्षुः । अवाक्षीः । अवोढम् । अवोढ । अवाक्षम् । अवाक्ष्व । अवाक्ष्म । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवक्षाथाम् । अवोढ्वम् । अवक्षि । अवक्ष्वहि । अवक्ष्महि । **टु वप् बीज सन्ताने** । बीज सन्ता = क्षेत्रे विकिरणम्, गर्भाधानं च । अयं छेदनेऽपि । केशान्वपति । वपते । उवाप । ऊपे । वप्ता । वप्स्यति । वप्स्यते । उप्यात् । वप्सीष्ट । प्रण्यवाप्सीत् (३) । अवप्त (४) । **वेञ् तन्तुसन्ताने** । वयति । वयते ।

**वेञो वयिः २।४।४१**

वा स्याल्लिटि । इकार उच्चारणार्थः । उवाय ।

**ग्रहि–ज्या-वयि-व्यधि-वष्टि-विचति-वृश्चति-पृच्छति-भृज्जतीनां-ङिति च ६।१।१६**

चात्किति संप्रसारणम् । इति यस्य प्राप्ते ।

---

(१) ईजतुः– यज्+अतुस्, इत्यत्र 'वचि स्वपीति संप्रसारणे पूर्वरूपे च इज् इत्यस्य द्वित्वे हलादिशेषे सवर्णदीर्घः ।

(२) इडभावपक्षे रूपमिदम् । ययज् थ अभ्यासस्य संप्रसारणं व्रश्च भ्रस्ज इति षत्वं ततः ष्टुत्वम् ।

(३) "नेर्गदनद . . ." इति णत्वम् ।

(४) "झलोझलि" इति सिचो लोपः ।

**लिटि वयो यः ६।१।३८**

वयो यस्य संप्रसारणं न स्याल्लिटि । ऊयतुः । ऊयुः ।

**वश्चास्यान्यतरस्यां किति ६।१।३९**

वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । वयस्तासावभावात्थलि नित्यमिट् । उवयिथ । स्थानिवत्वेन ञित्त्वात् तङ । ऊये । ऊवे । वयादेशाभावे ।

**वेञः ६।१।४०**

संप्रसारणं न स्याल्लिटि । ववौ । ववतुः । ववुः । वविथ, ववाथ । ववे । ववाते । वविरे । वाता । ऊयात् । वासीष्ट । अवासीत् । अवासीष्टाम । अवासिषुः । **व्येञ संवरणे** । व्ययति । व्ययते ।

**न व्यो लिटि ६।१।४६**

आत्वं न । परमपि हलादिः शेषं बाधित्वा यस्य संप्रसारणम् । उभयेषां ग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्यैव सिद्धे किं तेन । विव्याय । विव्यतुः (१)। विव्युः ।

**इडत्यर्तिव्ययतीनाम् ७।२।६६**

अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । विव्ययिथ । विव्यथुः । विव्य । विव्याय । विव्यय । विव्यिव । विव्यिम । विव्ये । व्याता । व्यास्यति । वीयात् । व्यासीष्ट । अव्यासीत् । अव्यास्त । **ह्वेञ् स्पर्धायां शब्दे च** ।

**अभ्यस्तस्य च ६।१।३३**

अभ्यस्तीभविष्यतो ह्वेञः संप्रसारणम् । जुहाव । जुहुवे । ह्वाता । ह्वास्यति । ह्वास्यते ।

**लिपि-सिचि-ह्वश्च ३।१।५३**

च्लेरङ । अह्वत् । अह्वताम् ।

**आत्मनेपदेष्वन्यतरस्याम् ३।१।५४**

अङ वा । अह्वत । अह्वास्त । **राजृ दीप्तौ** । राजति । राजते । रराज । रेजतुः (३) रराजतुः । रेजुः, रराजुः । रेजे, रराजे । **हिक्क अव्यक्ते शब्दे** । हिक्कति । हिक्कते । **अञ्चु गतौ**

---

(१) संप्रसारणे पूर्वरूपे 'वि' इत्यस्य द्वित्वे यणि ।

(२) यजादित्वात्संप्रसारणे 'अकृत्सार्वधातुकयोर्दीर्घः ।

(३) "फणां च सप्तानाम" इति – एत्वाभ्यासलोपौ ।

**पूजनेच** । अञ्चति । अञ्चते । अचु इत्येके । अचीत्यपरे । **टु याचृ याच्ञायाम्** । याचति । याचते । **बुधिर् बोधने** । बोधति । बोधते । अबुधत् (१), अबोधीत् । अबोधिष्ट । **खनु अवदारणे** । खनति । खनते । चखान । चख्नतुः (२) । चख्नुः । चख्ने । खायात् (३), खन्यात् । **चीबृ आदान संवरणयोः** । चीवति । चीवते । **चायृ पूजानिशामनयोः** । चायति । चायते । **व्यय गतौ** । व्ययति । व्ययते । **दाशृ दाने** । दाशति । दाशते । **भेषृ भये** । गतावित्येके । भेषति । भेषते । **अस गति दीप्त्यादानेषु** । असति । असते । आस । आसे । अयं वान्तोऽपि । **स्पश बाधनस्पर्शयोः** । स्पर्शनं = ग्रन्थनम् । स्पशति । स्पशते । **लष कान्तौ** । लष्यति, लषति । लष्यते । लषते । **चष भक्षणे** । चषति । चषते । **झष आदानसंवरणयोः** । झषति । झषते । **दासृ दाने** । दासति । दासते । **धावु गति शुद्ध्योः** । धावति । धावते । **इत्युभयपदिनः** ।

## ।।इति भ्वादिः।।

### अभ्यासः

**प्रश्न १. भ्रियात् इत्यस्य साधुत्वं दर्शयत**

उ०– भरणार्थकाद् भृ धातोः कर्तरि आशिषि लिङि लस्य तिपि सार्वधातुकसंज्ञां प्रबाध्य "लिङाशिषि" इति आर्धधातुकत्वे यासुटि कित्वे च भृयास् ति इति स्थिते प्राप्तस्य गुणस्य क्ङितिचेति निषेधे "रिङ्शयग्लिङ्क्षु" इति रिङादेशे "अकृत्सार्वधा तुकयोः" इति प्राप्तस्य दीर्घस्य रिङ्विधानसामर्थ्यात् दीर्घाभावे "इतश्चेतीकारलोपे सलोपे भ्रियात् इति रूपम् ।

**प्रश्न २. ईजतुः, इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ०– यज् धातोः कर्तरि लिटि लस्य तसि सर्वधातुकसंज्ञां बाधित्वा "लिट च" इति आर्धधातुकत्वे तसोऽतुसि "असंयोगादिति कित्वे" संप्रसारणं तदाश्रयं कार्यं च बलवदिति द्वित्वात्पूर्वं "वचि स्वपियजादीनां किति" इति संप्रसारणे पूर्वरूपे ततो द्वित्वेऽभ्यासादिकार्ये दीर्घे रुत्वे विसर्गे च ईजतुः इति रूपम् ।

**प्रश्न ३. वक्ष्यति इत्यस्य साधुत्वं विधेयम्**

उ०– प्रापणार्थकाद् वह् धातोः कर्तरि लृटि लस्य तिपि सार्वधातुकसंज्ञापूर्वकं शपं

---

(१) "इरितो वा" इति वैकल्पिकोऽङ् ।

(२) "गमहन....." इति उपधालोपः ।

(३) "ये विभाषा" इति विकल्पेन नस्यात्वम । लुङि–अखानीत् अखनीत् । आत्मनेपदे– अखनिष्ट । इत्यादि ।

प्रबाध्य स्यप्रत्यये आर्धधातुकत्वे प्राप्तस्येडागमस्य एकाच उपदेश इति निषेधे वह् स्यति इति जाते ढत्वे "षढो: क: सि" इति कत्वे षत्वे कष संयोगे क्षे वक्ष्यति, इति रूपम् ।

**प्रश्न ४. जुहाव इति रूपं साधयत**

उ०–ह्वेञ् धातोरात्वे कर्तरि लिटि लस्य तिपि सार्वधातुकसंज्ञां प्रबाध्य लिट चेति, आर्धधातुकत्वे तेर्णलादेशे "अभ्यस्तस्यचेति संप्रसारणे पूर्वरूपे द्वित्वेऽभ्यासादिकार्ये, उत्तर-खण्डस्य वृद्धौ आवादेशे जुहाव, इति रूपम् ।

**प्रश्न ५. खायात्, इति कथं सिद्ध्यति इति लिखत**

उ०– अवदारणार्थकात् खन धातो: कर्तरि लिङि लस्य तिपि सार्वधातुकसंज्ञां प्रबाध्य आर्धधातुकत्वे यासुटि कित्वे च खन् यास् ति इति जाते इतश्चेतीकारलोपे सकारल्लोपे च "ये विभाषा" इति पाक्षिके नस्यात्वे खायात्, पक्षे खन्यात्, इति रूपद्वयम् ।

**प्रश्न ६. लष्यति, इति प्रयोगं साधयत**

उ०– कान्त्यर्थकाद् लष् धातो: कर्तरि लटि लस्य तिपि सार्वधातुकसंज्ञां बाधित्वा "वा भ्राश–भ्लाश–भ्रमु–क्रमु–क्लमु–त्रुटि–लष:" इति पाक्षिके श्यनि लष्यति, पक्षे शपि लषति, इति रूपद्वयम् ।

## अभ्यासार्थं प्रश्ना:

**(१) एधाञ्चकृढ्वे, अचीकमत, दिद्युते, अद्युतत्, वर्त्स्यति स्यन्त्स्यति, अनुष्यन्दते, क्लृप्सीष्ट, विव्यथे, भ्रेजे, अभृत, उवोढ, ऊयु:, ऊयात्, विव्याय, अह्वत्, एतेषां प्रयोगाणां निष्पत्ति-प्रकिया साधु दर्शनीया ।**

**(२) निम्न लिखितानां सूत्राणां सोदाहरणमर्थान् विलिखत**

| | |
|---|---|
| (क) ह एति | (ख) म्वोश्च |
| (ग) तासि च क्लृप: | (घ) तृफलभजत्रपश्च |
| (ङ) उश्च | (च) अभ्यस्तस्य च |

**(३) एधै, अयिषीढ्वम्, कल्पते, जम्भते, इयाज, ववौ, विव्ययिथ, जुहाव, एषु प्रयोगेषु विशेषकार्यविधायकानि सूत्राणि विलिख्य तेषां कार्याणि च दर्शयत**

**(४) केवलमुत्तरयत**

(क) ऐधिढ्वम् अत्र धकारस्य ढत्वविधायकं सूत्रं किम् ?

(ख) पलायते अत्र केन सूत्रेण लत्वं विधीयते ?

(ग) ऊयतुः इत्यत्र यकारस्य सम्प्रसारणं कथं न जातम् ?

(घ) कल्प्तासि इत्यत्र कथमिण्न ?

(ङ) पेचिथ अत्र वैकल्पिकस्येडागमस्य प्रक्रियां सम्यग् ब्रूत ।

(५) **एधाञ्चक्राते, कामयध्वे, पलायते, द्योतिष्यध्वे, अवर्ते, अदविष्ट, हर्त्तास्थः, अपक्त, यक्ष्यसि, ऊहतुः, एतानि क्रियापदानि प्रयुज्य पृथग् वाक्यानि रचयत**

(६) **रूपाणि विलिखत**

(क) एध वृद्धौ इत्यस्य लङि ।

(ख) कम् कान्तौ इत्यस्य लुङि ।

(ग) क्षमूष् सहने इत्यस्य लिटि ।

(घ) वृतु वर्तने इत्यस्य लुङि उभयपदे ।

(ङ) भृञ् भरणे इत्यस्य लोटि उभयपदे ।

(च) वेञ् तन्तुसन्ताने इत्यस्य लिटि ।

(७) **सकारणं संशोध्यन्तामधस्तनवाक्यानि**

(क) तेषां विद्याः समेधन्ति पठन्ति पाठयन्ति ये ।

(ख) जगति तादृग् वस्तु नास्ति यच्चिरकालं तथैव वर्त्स्यते ।

(ग) रामलक्ष्मणौ वनात् प्रतिनिवृत्य मातुश्चरणा ववन्दतुः ।

(घ) नेपाले पुराऽपि युवतयो रम्याणि वस्त्राणि उयुः ।

(ङ) जनको यज्ञार्थं भूमिं चखने ।

(८) **भ्वादिप्रकरणस्थानां गाधृ– मदि– स्पदि– पर्द– दीक्ष– कृपू–भज– यज– डुवप्– राजृ– व्यय धातूनामर्था लेख्याः**

(९) **के ते यजाद्या धातवः ? यजादिधातुभ्यः किति परे केन सूत्रेण किं कार्यं विधीयते ?**

# अथादादिगणः

**ऋतेरीयङ् ३।१।२९**

स्वार्थे। ऋतिः सौत्रः। जुगुप्सायामिति बहवः। कृपायां चेत्येके। ऋतीयते। ऋतीयाञ्चक्रे। आयादय इति इयङभावपक्षे। शेषात्कर्तरीति परस्मैपदम्। आनर्त। अर्तिता। अर्तीष्यतीत्यादि।

**अद भक्षणे।**

**अदिप्रभृतिभ्यः शपः**

लुक् स्यात्। अत्ति। अत्तः। अदन्ति। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः।

**लिट्यन्यतरस्याम् २।४।४०**

अदोघस्लृ वा स्यात्। जघास। उपधालोपः (१)। घस्य चर्त्वं।

**शासि–वसि–घसीनां च ८।३।६०**

इण्कुभ्यामेषां सस्य षः। जक्षतुः (२)। जघसिथ (३)। आद (४)। आदतुः। आदुः। आदिथ (५)। अत्ता। अत्स्यति। अत्तु। अत्तात्। अत्ताम्। अदन्तु।

**हुझल्भ्यो हेर्धिः ६।४।१०१**

होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि, अत्तात्। अत्तम्। अत्त। अदानि। अदाव। अदाम।

**अदः सर्वेषाम् ७।३।१००**

अदः परस्यापृक्तस्य सार्वधातुकस्याऽट् स्यात्। आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म। अद्यात्। अद्याताम्। अद्युः। अद्यात्। अद्यास्ताम्। अद्यासुः।

**लुङ् सनो घस्लृ २।४।३७**

अदोघस्लृ स्याल्लुङि सनि च। लृदित्वादङ। अघसत्। आत्स्यत्।

---

(१) जघस्+अतुस्, इत्यत्र "गमहन...." इति सूत्रेण उपधालोपः।

(२) सस्य षत्वे घस्य चर्त्वम्। क ष संयोगक्षः।

(३) 'घस' इत्यस्य तासि प्रयोगाभावात् "उपदेशेऽत्वतः" इति निषेधाभावेन क्रादिनियमात् (क्राद्यन्यो लिटि सेड् भवेत्,) इत्युक्तेः नित्यमिट्।

(४) घस्लृ आदेशाभावपक्षे रूपम्।

(५) "इडत्यर्ति...." इति नित्यमिट्।

हन हिंसागत्योः । हन्ति ।

**अनुदात्तोपदेश–वनति–तनोत्यादीनामनुनासिक लोपो झलि क्ङिति ६।४।३७**

अनुनासिकान्तानामेषां लोपः । यमि–रमि–नमि–गमि–हनि–मन्यतयोऽनुदात्तोपदेशाः। तनु-षणु–क्षणु–क्षिणु–ऋणु–तृणु–घृणु–वनु–मनु इति तनोत्यादयः। हतः । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः ।

**वमोर्वा ८।४।२३**

उपसर्गस्थान्निमित्ताद्धन्तेर्नस्य णो वा। प्रहण्मि । प्रहन्मि । प्रहण्वः । प्रहन्व । प्रहण्मः । प्रहन्मः । जघान (१) । जघ्नतुः (२) । जघ्नुः ।

**अभ्यासाच्च ७।३।५५**

हन्तेर्हस्य कुत्वं स्यात् । जघनिथ, जघन्थ । जघ्नथुः । जघ्न । जघान, जघन । जघ्निव । जघ्निम। हन्ता। हनिष्यति (३) । हन्तु । हतात्। हताम्। घ्नन्तु ।

**हन्तेर्जः ६।४।३६**

हौ ।

**असिद्धवदत्राभात् ६।४।२२**

इत उर्ध्वमापादपरिसमाप्तेराभीयम् । समानाश्रये (४) तस्मिन्कर्तव्ये (५) तदसिद्धं स्यात्। इति जस्यासिद्धत्वान्न हेर्लुक् (६) । जहि, हतात् । हतम् । हत । हनानि । हनाव । हनाम। अहन् (७) । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व। अहन्म । हन्यात्।

---

(१) लिटि द्वित्वे हलादिशेषे 'हहन् अ' अभ्यासस्य "कुहोश्चुः" इति चुत्वम् । "हो हन्तेः" इति हस्य घत्वम्। "अत उपधायाः" इति वृद्धिः ।

(२) "गहमन " इति उपधालोपः । नकारे परे "होहन्तेः" इति घत्वम् ।

(३) "ऋद्धनोः स्ये" इति इट्।

(४) आभीये ।

(५) पूर्वकृतम्, आभीयम् ।

(६) "अतो हेः" इति हेर्लुक् प्राप्त आसीत् ।

(७) अत्र हल्ङ्यादिति तिपस्तकारस्य लोपः ।

**आर्धधातुके ६।४।४६**

इत्यधिकृत्य ।

**हनोवधलिङि २।४।४२**

**लुङि च ६।४।४३**

वध्यात् । वध्यास्ताम् । अवधीत् (१) । अहनिष्यत् । **यु मिश्रणामिश्रणयोः ।**

**उतो वृद्धिर्लुकि हलि ७।३।८९**

लुग्विषये उतो वृद्धिः स्यात्पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युव । युमः । युयाव । युयुवतुः । युयुवुः । युयविथ । युयुवथुः । युयुव । युयाव, युयव । युयुविव । युयुविम । यविता । यविष्यति । यौतु, युतात् (२) । अयौत् । अयुताम् । अयुवन् । युयात् । इह वृद्धिर्न । भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् । यूयासुः । अयावीत् । अयविष्यत् । (३) या प्रापणे । याति । यातः । यान्ति । ययौ (४) । याता । यास्यति । यातु । अयात् । अयाताम् ।

**लङः शाकटायनस्यैव ३।४।१११**

आदन्ताल्लङो झेर्जुसु वा । अयुः, अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । अयास्यत् । एवं वा गतिगन्धनयोः । **भा दीप्तौ । ष्णा शौचे ।** वान्यस्य-संयोगादे रित्येत्वम् । स्नेयात्, स्नायात् । **श्रा पाके । द्रा कुत्सायां गतौ । प्सा भक्षणे । पा रक्षणे । रा दाने । ला आदाने । दाप् लवने । ख्या प्रकथने ।** अयं सार्वधातुक एव प्रयोक्तव्यः । **विद ज्ञाने ।**

**विदो लटो वा ३।४।८३**

वेत्तेर्लटः परस्मै पदानां णलादयो वा । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे–वेत्ति । वित्तः । विदन्ति ।

---

(१) वधादेशोऽदन्तः, अल्लोपस्य स्थानिवत्वान्नोपधा वृद्धिः ।
(२) यासुटो ङित्वात् । तन्न पित्, साक्षादुक्तेन ङित्त्वेनाऽऽतिदेशिकस्य पित्वस्य बाधात् ।
(३) –गमने प्रसिद्धः ।
(४) "आत औ णलः" इति णल औत्वम् ।

## उषविदजागृभ्योऽन्यतरस्याम् ३।१।३८

एभ्यो लिट्याम् वा विदेरदन्तत्वप्रतिज्ञानादामिनगुणः । (१) विदाञ्चकार । विवेद (२) । वेदिता (३) । वेदिष्यति ।

## विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ३।१।४१

वेत्तेलोट्याम्, गुणाभावो लोटोलुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुष वचने न विवक्षिते, इति शब्दोपादानात् ।

## तनादिकृञ्भ्य उः ३।१।७९

शपोऽपवादः । विदाङ्करोतु ।

## अत उत्सार्वधातुके ६।४।११०

उप्रत्यान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति । विदाङ्कुरुतात् । विदाङ्कुरुताम् । विदाङ्कुर्वन्तु । विदाङ्कुरु (४) । विदाङ्करवाणि । वेत्तु । अवेत् । अवित्ताम् । अविदुः ।

## दश्च ८।२।७५

धातोः पदान्तस्य दस्य सिपिरुर्वा । अवेः, अवेत् । विद्यात् । विद्याताम् । विद्युः । विद्यात् । विद्यास्ताम् । विद्यासुः । अवेदीत् । अवेदिष्यत् । **अस् भुवि** (५) । अस्ति ।

## श्नसोरल्लोपः ६।४।१११

श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ।

## अस्तेर्भूः ६।४।५६

आर्धधातुके (६) । बभूव । भविता । भविष्यति । अस्तु, स्तात् । । स्ताम् । सन्तु ।

---

(१) लघूपधत्वाभावान्न गुणः ।

(२) आमोऽभावपक्षेरूपम् ।

(३) अनिट्कारिकासु तु श्यन् निर्देशेन सत्तार्थकस्य दिवादेर्विदो ग्रहणं, तेन अयं सेट् ।

(४) "उतश्च" इति हेर्लुक् ।

(५) सिजभ्यस्त विदिभ्यश्च इति झेर्जुस् ।

(६) सत्तायामित्यर्थः ।

(७) सर्वत्र आर्धधातुके (लिट्–लुट्–लृट्–आशीर्लिङि–लुङ लृङक्षु) अस्तें भूं भावः । बभूव, इत्यादय एव प्रयोगाः ।

**घ्वसोरेद्धावभ्यासलोपश्च ६।४।११९**

घोरस्तेश्चैत्वमभ्यासलोपश्च। ग्राभीय त्वाद्धेधिः(१)। (२)एधि, स्तात्। स्तम्। स्त। असानि। असाव। असाम। आसीत(३)। अस्ताम्। आसन्। स्यात्। स्याताम्। स्युः। भूयात्। अभूत्। अभविष्यत्।

**उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८।३।८७**

उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षोकारेऽचि चपरे। निःष्यात्। प्रादुःस्यात्। निःषन्ति। प्रादुः षन्ति। यच्परे किम्–अभिस्तः। **रु शब्दे**।

**तु–रु–स्तु–शम्यमः (४) सार्वधातुके ७।३।९५**

एभ्यः सार्वधातुकस्य हलादेस्तिङ ईड वा। नाभ्यस्तस्येत्यतोऽनुवृत्ति सम्भवे पुनः सार्वधातुक ग्रहणमपिदर्थम्। रवीति, रौति। रुवीतः। रुतः। हलादेः किम् – रुवन्ति। तिङः। किम्–शाम्यति। सर्वाधातुके किम्–आशिषि रूयात्। विध्यादौ तु रुयात्, रुवीयात्। अरावीत्। अरविष्यत्। तु इति सौत्रो धातु। **गति वृद्धि हिंसासु**। तवीति, तौति। तुवीतः, तुतः। तुवन्ति। तुताव। तोता। तोष्यति। **णु स्तुतौ**। नौति। नुनाव। नविता। **टुक्षु शब्दे**(५)। क्षौति। चुक्षाव। क्षविता। **क्ष्णु तेजने**। क्ष्णौति। क्ष्णविता। अक्ष्णावीत्। **ष्णु प्रसवणे**। स्नौति। सुष्णाव। स्नविता। **षुप्र सर्वैश्वर्ययोः**। प्रसवोऽभ्यनुज्ञानम्। सौति। सुतः। सुषाव। सोता। असौषीत्। **कु शब्दे**। कौति। चुकाव। कोता। **इण् गतौ**। एति। इतः।

**इणो यण् ६।४।८१**

इणो यण् स्यादजादौ प्रत्यये। इयङोऽपवाद। यन्ति।

**अभ्यासस्यासवर्णे ६।४।७८**

अभ्यासस्येवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि। इयाय(६)।

---

(१) एत्वस्याभीयत्वेना ऽसिद्धत्वात् "हुझल्भ्यो" इति हेर्धिः।

(२) (अस्+सि=हि) धि, सस्य एत्वम्, अकारस्य श्नसोरिति लोपः– एधि।

(३) लङि–आ+अस्+त् "अस्ति सिचोऽपृक्ते" इति ईट, आटश्चेति वृद्धिः आसीत्।

(४) ततोऽनुवृत्तौ तु 'पित्' इत्यप्यनुवर्तेत सहचरिता इत्यादि न्यायात्। तथाच 'अपिति' इदं न स्यात्।

(५) शब्दे=छि वका शब्दे–इत्यर्थः।

(६) इ+इ+अ, वृद्धौ, आयादेशे, अभ्यासस्य 'इयङ' इयाय।

**दीर्घं इणः किति ७।४।६९**

इणोऽभ्यासस्य दीर्घः किति लिटि । ईयतुः । ईयुः । इययिथ (१), इयेथ । एता । एष्यति । एतु (२) । ऐत् । ऐताम् । आयन् (३) । इयात् । ईयात् ।

**एतेर्लिङि ६।४।६७**

उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि । निरियात् ।

**अन्तादिवच्च ६।१।८५**

योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्स्यात् (**उभयत आश्रयणे नान्तादिवत्**) अभीयात् (४) । अणः किम्– समेयात् (५) ।

**इणो गा लुङि २।४।४५**

"गातिस्थेति" सिचो लुक् । अगात् । अगाताम् । अगुः । ऐष्यत् । **इक् स्मरणे** । अयमधिपूर्व एव । 'अधीगर्थदयेशां कर्मणि' इति लिङ्गात् (**इण्वदिक इति वक्तव्यम्**) अधियन्ति । अध्यगात् । केचित्त्वार्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः, तन्मते यण्न । तथा च भट्टिः– ससीतयोराघवयोरधीयन्निति । **वी गति-व्याप्ति-प्रजन-कान्त्यसन-खादनेषु** । प्रजनम्=गर्भग्रहणम् । असनंक्षेपणम् । वेति । वीतः । वियन्ति । वेषि । वेमि । वीहि । अवेत् । अवीताम् । अवियन् । अटि सति अनेकाच्त्वाद्यणिति केचित्–अव्यन् । ईकारोऽपि धात्वन्तरं प्रश्लिष्यते । एति । ईतः । इयन्ति । ईयात् । ऐषीत् । **वच परिभाषणे** । वक्ति । वक्तः । अयमन्तिपरो न प्रयुज्यते । बहुवचन परे इत्यन्ये । झिपर इत्यपरे । वक्तु । वग्धि । वच्यात् । उच्यात् ।

**अस्यति–वक्ति–ख्यातिभ्योऽङ् ३।१।५२**

एभ्यश्च्लेरङ् स्यात् ।

**वच उम् ७।४।२०**

अङि परे । अवोचत् । अवक्ष्यत् । **मृजू शुद्धौ** ।

---

(१) "थलिवेट्" उभयत्रापि गुणः, अभ्यासस्य इयङ् ।

(२) ह्रौ – 'इहि' ।

(३) इ+अन् "इणो यण्" इति यण्, तस्याभीयत्वेनाऽसिद्धत्वादाट् । आयन् ।

(४) अत्र सवर्णदीर्घस्य पूर्वान्तवद्भावे–इणोऽण् नास्ति, परादिवद्भावे उपसर्गस्वरूपं भज्यते, उभयत आश्रयणे च नान्तादिवद्भाव इति न ह्रस्वः ।

(५) सम्+आ+ईयात्, गुणे कृते, 'समेयात्' इत्यत्र एकारोऽण् नास्तीति न ह्रस्वः ।

### मृजेर्वृद्धिः ७।२।११४

मृजेरिको वृद्धिः स्याद् धातुप्रत्यये परे। मार्ष्टि। मृष्ट। (**क्ङित्यजादौ वेष्यते**)। मृजन्ति, मार्जन्ति। ममार्ज। ममार्जतुः, ममृजतुः। ममार्जिथ, ममार्ष्ठ (१)। मार्जिता। मार्ष्टा। मार्ष्टु। मृड्ढि। अमार्ट्। अमार्ड्। अमार्जीत्, अमार्क्षीत्। अमार्क्ष्यत्, अमार्जिष्यत्। **रुदिर् अश्रुविमोचने।**

### रुदादिभ्यः सार्वधातुके ७।२।७६

रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट्। रोदिति। रुदितः। हौ परत्वादिटि धित्वं न (२) रुदिहि।

### रुदश्च पञ्चभ्यः ७।३।९८

हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट्।

### अड्गार्ग्य–गालवयोः ७।३।९९

अरोदीत्, अरोदत्। अरुदिताम्। अरुदन्। अरोदीः, अरोदः। प्रकृतिप्रत्यय विशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट् (**असिद्धं बहिरङ्गमन्तरङ्गे**)। रुद्यात्। अरुदत् (३)। अरोदीत्। अरोदिष्यत्। **ञिष्वप् शये।** स्वपिति। स्वपितः। सुष्वाप। सुषुपतुः। सुष्वपिथ, सुष्वप्थ।

### सुविनिर्दुर्भ्यः सुपि–सूति–समाः ८।३।८८

एभ्य सुप्यादे सस्य षः। किति लिटि। परत्वात्संप्रसारणे षत्वे च कृते द्वित्वम् (**पूर्वत्रासिद्धीयम द्विर्वचने**) (४) सुषुषुपतुः। अकिति तु द्वित्वेऽभ्यासस्य संप्रसारणम्। षत्वस्यासिद्धत्वात्, ततः पूर्वं "हलादिः शेषः" नित्यत्वाच्च। ततः सुपिरूपाभावान्न षः। सुसुष्वाप। स्वप्ता। अस्वपीत्, अस्वपत् (५)। स्वप्यात्। सुप्यात्। सुषुप्यात्। अस्वाप्सीत्। अस्वप्स्यत्।

---

(१) मृज् + थल् द्वित्वादि, वृद्धिश्च 'व्रश्च' इति षत्वे ष्टुत्वम् (ऊदित्वादिडभावेरूपमिदम्) वसमसो– ममार्जिव ममृजिव, ममृज्व।

(२) सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति न्यायात्।

(३) "इरितो वा" इत्यङ्‌ विकल्पेन।

(४) ननु 'सुषुषुपतुः, इत्यत्र परत्वासंप्रसारणे षत्वे कृतेऽपि तस्य त्रैपादिकत्वेनाऽसिद्धत्वात् षकारोपलक्षितस्य द्वित्वं न स्यात्, इति चेत्तत्राह–पूर्वत्रासिद्धीयमद्विर्वचन इति–अर्थात्-द्विर्वचने कर्तव्ये पूर्वत्रासिद्धमिति न प्रवर्तते।

(५) "अड् गार्ग्य" इति अट् पक्षे रुदश्चेति ईट्।

**श्वस प्राणने** । श्वसिति । श्वसितः । शश्वास । श्वसिता । श्वसिष्यति । श्वसितु । अश्वसीत्–अश्वसत् । अश्वसिताम् । अश्वसन् । श्वस्यात् । ह्म्यन्तेति–वृद्धिर्न । अश्वसीत् । **अन च** ॥ अनिति । आन । अनिता । आनीत्–आनत् ।

## अनितेः ८।४।१९

उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः । प्राणिति । **जक्ष भक्ष हसनयोः** । जक्षिति(१) । जक्षितः ।

## अदभ्यस्तात् ७।१।४

झस्य अत् स्यात् । अन्तापवादः । जक्षति । अजक्षीत्, अजक्षत् । अजक्षिताम् । सिजभ्यस्तेति जुस् । अजक्षुः ॥ **जागृ निद्राक्षये** । जागर्ति । जागृतः । जाग्रति । जागराञ्चकार(२), जजागार(३) ।

## जाग्रोऽवि–चिण्–णल्–ङित्सु ७।३।८५

जागतेर्गुणः स्याद्विचिण्णल ङिद्भ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च । जजागरतुः, जजागरुः । जागरिता । अजागः । अजागृताम् ।

## जुसिच ७।३।८३

अजादौ जुसि इगन्ताङ्गस्य गुणः । अजागरुः । अजादौ किम्–जागृयुः । आशिषि तु–जागर्यात्(४) । जागर्यास्ताम् । जागर्यासुः । अजागरीत् । **दरिद्रा दुर्गतौ** । दरिद्राति ।

## इद् दरिद्रस्य ६।४।११४

हलादौ क्ङिति सार्वधातुके इत्स्यात् । दरिद्रितः ।

## श्नाभ्यस्तयोरातः ६।४।११२

लोपः क्ङिति सार्वधातुके । दरिद्रति । अनेकाच्त्वादाम् । दरिद्राञ्चकार । 'आत औ णलः' इत्यत्र ओ इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम् । अत एव

---

(१) "रुदादिभ्यः सार्वधातुके" इतीट् ।

(२) "उषविदजागृभ्यो" इति वैकल्पिक आम् । "सार्वधातुका....." इति गुणः ।

(३) आमभावे जाकारस्य द्वित्वे वृद्धौ जजागार । अतुसादौ कित्वाद् गुण निषेधे प्राप्ते जाग्रोऽविचिण् णल्ङित्सु इति गुणः ।

(४) "किदाशिषि" इति यासुटः कित्वाद् 'जाग्रोऽवि....' इति गुणः ।

ज्ञापकादाम्नेत्येके। ददरिद्रौ। (दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः) (लुङि (१) वा) (सनिण्वुलि ल्युटि च न) दरिद्रिता। अदरिद्रीत्। अदरिद्रिताम्। अदरिद्रुः। दरिद्रियात्। दरिद्र्यात्। अदरिद्रीत्। इट् (२) सकौ। अदरिद्रासीत्। **चकासृ दीप्तौ**। चकास्ति। चकास्तः। चकासति। चकासाञ्चकार। चकासिता। चाकस्तु। चकाधि।

**तिप्यनस्तेः ८।२।७३**

पदान्तस्य सस्य दः स्यात् तिपि नत्वस्तेः। अचकात् अचकाद्। अचकास्ताम्। अचकासुः।

**सिपिधातोरुर्वा ८।२।७४**

पदान्तस्य सस्य। पक्षे दः। अचकाः, अचकात्॥ **शासु अनुशिष्टौ**। शास्ति।

**शास इदङ्हलोः ४।४।३४**

शास उपधाया इत्स्यादङि (३) हलादौ क्ङिति च। शिष्टः। (४) शासति, शशास। शशासतुः। शासिष्यति। शास्तु, शिष्टात्। शिष्टाम्। शासतु।

**शाहौ (५) ६।४।३५**

शास्तेः। तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः। शाधि। अशात्। अशिष्टाम्। आशासुः (६)। अशाः, अशात्। शिष्यात्।

**सर्तिशास्त्यर्तिभ्यश्च ३।१।५६**

एभ्यश्च्लेरङ कर्तृलुङि। अशिषत्। अशासिष्यत्॥ **इति परस्मैपदम्**॥

**शीङ स्वप्ने**॥

---

(१) सनि यथा- दिदरिद्रासति 'ण्वुलि यथा- दरिद्रायकः। ल्युटि यथा-दरिद्राणः सनि दरिद्रातेः अनन्तरस्येति न्यायाद् एतद्वार्तिकप्राप्तस्यैव (दरिद्रातेरार्धधातुके विवक्षिते– आलोपो वाच्यः) इति प्राप्तस्यैव लोपस्य निषेधः। तेन "तनिपति दरिद्राणामुपसंख्यानम्" इति दरिद्रातेः सन इट्पक्षे "आतो लोप इटि च इत्यालोपो" भवत्येव दिदरिद्रिषति।

(२) आलोपे अदरिद्रीत्। आलोपाभाव पक्षे 'यमरमनमातां...' इति इट् सकौ।

(३) अङसाहचर्यात्परस्मैपदे एव नेह– आशास्ते।

(४) "शासिवसि..." इति षः।

(५) शास्तेः शादेशः स्याद् हौ परे– इति सूत्रार्थः।

(६) अभ्यस्तत्वात् "सिजभ्यस्त .." इति झेर्जुस्।

**शीङः सार्वधातुके गुणः ७।४।२१**

शेते । शयाते ।

**शीङो रुट् ७।१।६**

झादेशस्यातोरुडागमः स्यात् । शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे । शिश्ये । शयिता । शयिषीष्ट । अशयिष्ट । अशयिष्यत ॥ **इङ अध्ययने** । इङिकावध्युपर्सगतो न व्यभिचरतः । अधीते । अधीयाते । अधीयते ।

**गाङ लिटि २।४।४९**

इङो गाङ स्याल्लिटि । अधिजगे । अध्येता । अध्येष्यते । अधीताम् । अधीष्व । अधीयाथाम् । अधीध्वम् । अध्ययै (१) । अध्ययावहै । अध्ययामहै । अध्यैत । अध्यैयाताम् (२) । अध्यैध्वम् । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीयाताम् । अधीयीरन् । अध्येषीष्ट ।

**विभाषा लुङ्लृङोः २।४।५०**

इङो गाङ वा स्यात् ॥

**गाङ-कुटादिभ्योऽञ्णिन् ङित् १।२।१**

गाङादेशात्कुटादिभ्यश्चाऽञ्णितः प्रत्यया ङितः स्युः ॥

**घु-मा-स्था-गा-पा-जहाति-सां हलि ६।४।६६**

एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट (३), अध्यैष्ट । अध्यगीष्यत, अध्यैष्यत । **ईर गतौ कम्पने च** । ईर्ते । ईराञ्चक्रे । ईरिता । ईरिष्यते । ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐरिष्ट ॥ **ईड स्तुतौ** । ईट्टे ।

**ईशः से ७।२।७७**

**ईडजनोर्ध्वे च ७।२।७८**

ईशीड्जनां से ध्वेशब्दयोः सार्वधातुकयोरिट् स्यात् । योगविभागो वैचित्र्यार्थः (४) । ईडिषे । ईडिध्वे । एकदेशविकृतस्यानन्यत्वात्—ईडिष्व । ईडिध्वम् । विकृतिग्रहणेन प्रकृतेरग्रहणात्

---

(१) अधि+इ,+इ, (आ+इ–ए–ऐ) अधि इ ऐ, अत्र गुणाऽयादेशयोः कृतयोरुपसर्गस्य यण् अध्ययै ।

(२) परत्वात्पूर्वम्, इयङ, तत आट् ततो वृद्धिः ।

(३) सिचो ङित्वादीत्वम् ।

(४) वैचित्र्यञ्चेह—'ध्वे' इत्यस्य पूर्वत्रापकर्षः 'से' इत्यस्य—उत्तरत्राऽनुवृत्तिरिति ।

ऐड्ढ्वम्(१)। **ईश ऐश्वर्ये**। ईशिषे। ईशिध्वे। **आस उपवेसने**। आस्ते। दयायासश्चेत्याम्। आसाञ्चक्रे। आस्व। आध्वम्। आसिष्ट। **आङः शासु इच्छायाम्**। आशास्ते। आशासाते। **वस आच्छादने**। वस्ते। वस्से। वध्वे। ववसे। वसिता। **णिसि चुम्बने**। निंस्ते। **निजि शुद्धौ**। निङ्क्ते। निङ्क्षे(२)। निञ्जिता(३)। **वृजी वर्जने**। वृक्ते। वृजाते। इदिदित्यन्ये। वृङ्क्ते। **पृची संपर्चने**। पृक्ते। **षूङ प्राणिगर्भविमोचेन**। सूते। सुषुवे। सुषुविषे। सविता, सोता। सुवै। सविषीष्ट। असविष्ट। असोष्ट। **चक्षिङ व्यक्तायां वाचि**। अयं दर्शनेऽपि। इकारोऽनुदात्तो। युजर्थः। नुम्तु न। अन्त्य इदिति व्याख्यानात्। चष्टे। चक्षाते। आर्धधातुके

**चक्षिङः ख्याञ् ६।४।५४**

**वा लिटि ६।४।५२**

अत्र भाष्ये—ख्शादिरयमादेशः। असिद्धिकाण्डे शस्य योवेति स्थितम्। ञित्वात्पदद्वयम्। चख्यौ। चख्ये। चक्शौ। चक्शे। चचक्षे। ख्याता। क्शाता। ख्याष्यति। ख्यास्यते। क्शास्यति। क्शास्यते। चष्टाम्। अचस्ट। चक्षीत। ख्यायात्। ख्येयात्। क्शायात्। क्शेयात। अस्यतिवक्ति इति-अङ। अख्यत, अख्यत्। अक्शासीत्, अक्शास्त। वर्जने क्शाञ् नेष्टः। समचक्षिष्टेत्यादि

## ॥ इत्यात्मनेपदिनः ॥

---

(१) विकृतिग्रहणेन='ध्वे' इति विकृतरूपग्रहणेन, प्रकृतेः= ध्वम्' इत्यस्याग्रहणादिट् न।

(२) निज् धातोः से परे नुमि जस्य "व्रश्चेति" षत्वे, "षढोः कः सि" इति कः। सस्य षत्वम्, कष संयोगे क्षः।

(३) अनिट्केषु णिजिर् इति जौहोत्यादिकस्य ग्रहणादयं-सेट्।

# अथोभयपदिनः

**द्विष अप्रीतौ** । द्वेष्टि, द्विष्टे। द्वेक्ष्यति । द्विड्ढि । द्वेषै । अद्वेट् ।

**द्विषश्च ३।४।११२**

लङो झेर्जुस्वा । अद्विषुः, अद्विषन् । अद्विक्षत् (१) **दुह प्रपूरणे** । 'दादेर्धातोर्घः' इति हस्य घः । दोग्धि । दुग्धः । दुहन्ति । धोक्षि (२) । दुग्धे । दुहाते । दुहते। धुक्षे । दुहाथे । धुग्ध्वे । दुह्वहे । दुह्महे। दुदोह। दुदुहे । दोग्धा । धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि । दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक् । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात्, दुहीत । धुक्षीष्ठ (३)। अधुक्षत् ।

**लुग्वा दुह–दिह–लिह–गुहामात्मनेपदेदन्त्ये ७।३।७३**

एषां क्सस्य लुग्वा दन्त्येतङि अलोऽन्त्यस्य । अदुग्ध (४) । अधुक्षत ।

**क्सस्याचि ७।३।७२**

अजादौ तङि क्सस्य लोपः । अधुक्षाताम् । अधुक्षन्त (५) ।

अधुक्षथाः, अदुग्धाः । अधुक्षाथाम् । अधुक्षध्वम्, । अधुग्ध्वम् । अधुक्षि । अधुक्षावहि, अदुह्वहि । अधुक्षामहि । अधोक्ष्यत् । अधोक्षत। एवं **दिह उपचये** । उपचयो वृद्धिः। **लिह**

---

(१) 'शलइगुपधादनिटः' इति क्सः ।

(२) दुह सि गुण 'दादेर्धातोर्घः, इति हस्य घत्वम्, एकाचो वशो. . .' इति दस्य धः । सस्य षत्वम्, कष संयोगे क्षः ।

(३) लिङसिचावात्मनेपदेषु' इति कित्वा न्न गुणः ।

(४) क्सप्रत्ययस्यान्त लोपे सकारस्य च 'झलो झलि' इति लोपे हस्य घः , तकारस्य धः, घस्य गः, अदुग्ध । लुगभावे अधुक्षत ।

(५) झस्याजादित्वाभावात् 'पूर्वं क्सस्याचि' इत्यस्य प्राप्तिरेव नास्ति । अन्तादेशे कृतेऽजादित्वात् 'क्सस्याचि' इति अकारलोपः = अधुक्षन्त ।

**आस्वादने** । लेढि । लीढः । लिहन्ति । लेक्षि (१) । लीढे । लिहाते । लिहते । लिक्षे । लिहाथे । लीढ्वे । लेढु, लीढात् । लीढाम् । लिहन्तु । लेढि । लिहानि । लीढाम् । अलेट् । अलीढाम् ।

**ब्रूञ् व्यक्तायां वाचि ।**

**ब्रुवः पञ्चानामादित आहो ब्रुवः ३।४।८४**

ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । आह । आहतुः । आहुः ।

**आह स्थः ८।२।३५**

झलि । चर्त्वम् । आत्थ । आहथुः ।

**ब्रुव ईट् ७।३।९३**

ब्रुवो हलादेः पित ईट् । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते ।

**ब्रुवो वचिः २।४।५३**

आर्धधातुके । उवाच (२) । ऊचतुः (३) । ऊचुः । उवचिथ, उवक्थ । ऊचे । वक्ता । वक्ष्यति, वक्ष्यते । ब्रवीतु, ब्रूतात् । ब्रूताम् । ब्रूहि । ब्रवाणि । ब्रूताम् । ब्रवै । अब्रवीत् । अब्रूत । ब्रूयात् । ब्रुवीत । उच्यात् । वक्षीष्ट । अवोचत् (४) । अवक्ष्यत् । चर्करीतं च । चर्करीतमिति-यङ लुगन्तस्य संज्ञा तददादौ बोध्यमित्यर्थः। **ऊर्णुञ् आच्छादने ।**

**उर्णोतेर्विभाषा ७।२।६**

वृद्धिर्वा हलादौ पिति सार्वधातुके । ऊर्णौति, ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते । (५) **(ऊर्णोतेराम्नेति वाच्यम् ।)**

---

(१) लिह् + सि गुणे ढत्वे 'षढोः कः सि' इति ढस्य कत्वे सस्य षत्वे कष संयोगे क्षः ।

(२) लिट्यभ्यासस्योभयेषामिति सम्प्रसारणम् ।

(३) 'वचिस्वपियजादीनाम्' इति सम्प्रसारणे कृते पूर्वरूपे च तत उच् इत्यस्य द्वित्वे हलादिशेषे सवर्णदीर्घः ।

(४) 'अस्यतिवक्ति . . . .' इत्यङि 'वच उम्' इति उम् आद्गुणः इति गुणः। आत्मनेपदे– अवोचत ।

(५) 'इजादेश्चगुरु . . . .' इति प्राप्तं निषिध्यते ।

**नन्द्राः संयोगादयः ६।१।३**

अचः पराः संयोगादयो नदराद्विर्नभवन्ति । (१) नु शब्दस्य द्वित्वम् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ।

**विभाषोर्णोः १।२।३**

इडादि प्रत्ययो वा ङिद्वत् । ऊर्णुनुविथ (२) ऊर्णनविथ । ऊर्णुविता, ऊर्णविता । ऊर्णौतु, ऊर्णोतु । ऊर्णवानि । ऊर्णवै ।

**गुणोऽपृक्ते ७।२।९१**

ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः (३) । और्णोत् । और्णोः । और्णुतम् । ऊर्णुयात् । ऊर्णुयाताम् । उर्णुयात् । ऊर्णूयास्ताम् । ऊर्णुविषीष्ट, ऊर्णविषीष्ट । और्णुवीत् ।

**ऊर्णोतेर्विभाषा ७।३।९०**

इडादौ परस्मैपदे परे सिचि वृद्धिर्वा । और्णावीत् । और्णाविष्टाम् । पक्षे गुणः । और्णवीत् । और्णविष्टाम् ।

## ॥ इत्यदादयः ॥

### अभ्यासः

**प्रश्न १. जक्षतुः, इत्यस्य साधुत्वं दर्शयत**

उ०–अद् धातोः कर्तरि लिटि "लिट्यन्यतरस्याम्" इति पाक्षिके घस् लादेशे घस ल् इति जाते तसि तसोऽतुसि "असंयोगादिति कित्वे द्वित्वेऽभ्यासादि कार्ये जघस् अतुस् इति जाते "गमहनजन......" इति उपधालोपे "शासिवसि घसीनां च" इति षत्वे घस्य चर्त्वे कष संयोगे क्षः जक्षतुस् रुत्वे विसर्गे च जक्षतुः पक्षे आदतुः, इति रूपद्वयम् ।

**प्रश्न २. हनिष्यति, इति कथं सिध्यति लिखत**

उ०–हन् धातोः कर्तरि लृटि लस्य तिपि सार्वधातुकसंज्ञां प्रबाध्य "स्यतासी लृलुटोः' इति स्यप्रत्ये आर्धधातुकत्वे, प्राप्तस्यडागमस्य 'एकाच उपदेश" इति निषेधे प्राप्ते तं प्रबाध्य "ऋद्धनोः स्ये" इति इटि षत्वे हनिष्यति, इति रूपम् ।

---

(१) णत्वस्याऽसिद्धत्वादित्यनुसन्धेयम्, अत एव नोत्तरखण्डे णत्वश्रवणम् । सर्वत्र धातुषु रेफात्परस्य णकारस्य नकारस्थानिकत्वमेव, तथैवोक्तम्–

नकारजावनुस्वार पञ्चमौ झलि धातुषु ।
सकारजश्शकारश्चेषाट्टवर्गस्तवर्गजः ॥

(२) ङित्वपक्षे 'उवङ' तदभावपक्षे गुणः ।

(३) निरवकाशत्वात् ।

**प्रश्न ३. युयात्, इति प्रयोगं साधयत**

उ०–यु धातोः कर्तरि विधिलिङि लस्य तिपि सार्वधातुकत्वे शपि, लुकि यासुटि ङित्वे च यु यास् ति इति स्थिते "इतश्चेती"कारलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे युयात्, इति रूपम्। "उतो वृद्धिर्लुकि हलि" इति वृद्धिस्तु न। यासुटो ङित्वेन लाश्रयमनुबन्धकार्यं नादेशानामिति ज्ञापनात्।

**प्रश्न ४. अविदुः, इत्यस्य सिध्दिप्रकारो दर्शनीयः**

उ०–ज्ञानार्थकाद् विद् धातोः कर्तरि लङि, अङ्गसंज्ञापूर्वकेऽडागमे लस्य झौ सार्वधातुकत्वे शपि शपो लुकि झेरन्तादेशं बाधित्वा "सिजभ्यस्त विदिभ्यश्च" इति झेर्जुसि अपित्सार्वधातुकतया ङित्व प्रयुक्तस्य गुणस्य निषेधे रुत्वे विसर्गे च अविदुः, इति रूपम्।

**प्रश्न ५. आसीत्, इति यया रीत्या निष्पद्यते सा रीति र्वर्णनीया**

उ०–अस् धातोः कर्तरि लङि अटि प्राप्ते "आडजादीनामि"ति आडागमे लस्य तिपि सार्वधातुकत्वे शपि शपो लुकि "इतश्चे" ति इकार लोपेऽपृक्तत्वे "अस्तिसिचोऽपृक्ते" इति ईडागमे "आटश्चे"ति वृद्धौ आसीत्, इति रूपम्।

**प्रश्न ६. इययिथ, इत्यस्य साधुत्वं वर्णयत**

उ०–इण् धातोः कर्तरि लिटि लस्य सिपि थलि इडागमस्य एकाच उपदेश इति निषेधे प्राप्ते क्रादि नियमात्प्राप्तस्येडागमस्य "अचस्तास्वदि"ति थलि निषेधे प्राप्ते भारद्वाजमते, इडागमे इ इ थ इति जाते द्वित्वेऽभ्यासत्वे इ इ इथ अभ्यासोत्तरखण्डे गुणे "अभ्यासस्यासवर्णे" इति इयङि अयादेशे इययिथ, इयेथ, इति रूपद्वयम्।

**प्रश्न ७. अवोचत् इति, प्रयोगं साधयत**

उ०– परिभाषणार्थकाद् वच् धातोः कर्तरि लुङि अङ्गसंज्ञाप्रयुक्तेऽटि सार्वधातुकसंज्ञायां प्राप्तं शपं प्रबाध्य च्लौ "अस्यति–वक्ति ख्यातिभ्योऽङ" इति अङि "वच उम्" इति उमि गुणे "इतश्च" इति इकारलोपे, अवोचत्, इति रूपम्।

**प्रश्न ८. अजागरुः, इत्यस्य सिद्धिः कार्या**

उ०– जागृ धातोः कर्तरि लङि अडागमे लस्य झौ सार्वधातुकत्वे शपि शपो लुकि अभ्यस्ततया "सिजभ्यस्त विदिभ्यश्च" इति झेर्जुसि "जुसि च" इति गुणे रुत्वे विसर्गे च अजागरुः, इति रूपम्।

**प्रश्न ९. शेरते, इति कया रीत्या सिध्यति लिखत**

उ०– शीङ धातोः कर्तरि लटि लस्यात्मनेपदसंज्ञके झे सार्वधातुकत्वे शपि शपो लुकि "आत्मनेपदेष्वनतः" इति झस्यातादेशे "शीङो रुट्" इति रुडागमे "शीङः सार्वधातुकेगुणः" इति गुणे टेरेत्वे शेरते इति।

**प्रश्न १०. अध्यगीष्ट, इति कथं सिध्यति लिखत**

उ०— अध्युपसर्गपूर्वकात्, इङ धातोः कर्तरि लुङि अटि "विभाषा लुङ लृङोः" इति पाक्षिके गाङादेशे लस्यात्मनेपदसंज्ञके तादेशे सार्वधातुकत्वे प्राप्तं शपं बाधित्वा च्लौ च्लेः सिचि, आर्धधातुकत्वे, प्राप्तस्येडागमस्य एकाच्तया निषेधे "गाङ–कुटादिभ्योऽञ्णिन् ङित्" इति सिचो ङित्वे "घु–मा–स्था–गा–पा–जहाति–सां हलि" इति आकारस्य, ईत्वे षत्वे ष्टुत्वे अध्यगीष्ट, पक्षे अध्यैष्ट, इति रूपद्वयम्।

**प्रश्न ११. चख्यौ, इत्यस्य साधुत्वं वर्णयत**

उ०— चक्षिङ धातोः कर्तरि लिटि "चक्षिङः ख्याञ्" इति पाक्षिके ख्याञादेशे लस्य तिपि सार्वधातुकत्वं प्रबाध्य 'लिट् च' इति आर्धधातुकत्वे णलादेशे द्वित्वेऽभ्यासादिकार्ये "आत औ णलः" इति औत्वे वृद्धौ चख्यौ इति रूपम्। पक्षे चक्शौ, इति रूपद्वयम्।

**प्रश्न १२. लेक्षि, इति प्रयोगं साधयत**

उ०— आस्वादनार्थकात् लिह् धातोः कर्तरि लटि लस्य सिपि सार्वधातुकत्वे शपि शपो लुकि लघूपधगुणे ढत्वे "षढोः कः सि" इति कत्वे षत्वे क्षत्वे लेक्षि, इति रूपम्।

**प्रश्न १३. और्णोत्, इत्यस्य प्रक्रिया दर्शनीया**

उ०— ऊर्णुधातोः कर्तरि लङि अङ्ग संज्ञाप्रयुक्तेऽटं प्रबाध्य आटि लस्य तिपि सार्वधातुकत्वे शपि शपो लुकि "इतश्चेति" इकारलोपेऽपृक्तसंज्ञायाम् "ऊर्णोतेर्विभाषा" इति पाक्षिक्यां वृद्धौ प्राप्तायां तां प्रबाध्य "गुणोऽपृक्ते" इति गुणे सिद्धम्।

## अभ्यासार्थं प्रश्नाः

(१) **जघास, जहि, युयात् विदाञ्चकार, अवेः, स्तः, अभीयात्, अगुः, अवोचत्, अमार्ट्, अरोदीत्, ददरिद्रौ, अशिषत्, शेरते, अधिजगे, चख्यौ, अद्विषुः, धोक्षि, लीढः, उवाच, ओर्णोत् एते प्रयोगा कथं सिध्यन्ति ?**

(२) **निम्नस्थानां सूत्राणामर्थान् विलिखत**

(क) हुझल्भ्यो हेर्धिः
(ख) अत उत्सार्वधातुके
(ग) एतेर्लिङि
(घ) विभाषा लुङलृङोः
(ङ) घु–मा–स्था–गा–पा–जहातिसां हलि

(२) क्रियागताऽशुद्धयः शोधनीयाः

(क) व्याघ्रा पशून् हन्ति

(ख) शिक्षका विद्यार्थिनोऽनुशासन्तु

(ग) असन्तुष्टो जन सर्वदा दरिद्रति

(घ) वयं वेदमध्यैमहे

(ङ) देवदत्तो विज्ञानमध्यैषीत्

(४) ख्या प्रकथने इत्यस्य धातोर्लृटि लुङि च सम्पद्यमानानि, रूपाणि विलिखित।

(५) आदन्, एधि, विदांकरवावः, अद्वेट्, ऊचुः, एतानि क्रियापदानि प्रयुज्य पृथक् पञ्च वाक्यानि रचयत।

(६) वध्यात्, आसीत्, शिष्टः, मार्ष्टि, शाधि, एषु प्रयोगेषु प्रयुज्यमानानि मुख्य सूत्राणि तेषां कार्याणि च दर्शय त।

(७) णु स्तुतौ, चकासृ दीप्तौ, चक्षिङ व्यक्तायां वाचि, लिह् आस्वादने, लष कान्तौ, एषा धातूना क्रमेण लिटि, लोटि, विधिलिङि, आशिषिलिङि, लुङि, मध्यमपुरुषस्यैक-वचने जायमानानि रूपाणि निष्पादयत।

# अथ जुहोत्यादिगणः

**हु दानादनयोः(१२) ।**

**जुहोत्यादिभ्यः श्लुः २।४।७५**

शपः श्लुः स्यात् ।

**श्लौ ६।१।१०**

धातोर्द्वे स्तः । जुहोति(२) । जुहुतः । हुश्नुवोरिति यण् । जुह्वति(३) ।

**भीह्रीभृहुवां श्लुवच्च ३।१।३९**

एभ्यो लिट्याम् वा स्यादामिश्लाविव कार्यं च(४) । जुहवाञ्चकार, जुहाव(५) । होता । होष्यति । जुहोतु, जुहुतात् । जुहुताम् । जुह्वतु । जुहुधि(६) । जुहवानि । अजुहोत् । अजुहुताम् । अजुहवुः(७) । जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् । **ञिभी भये** । बिभेति ।

**भियोऽन्यतरस्याम् ६।४।११५**

इकारो वा स्याद्धलादौ सार्वधातुके क्ङिति । बिभितः, बिभीतः । बिभ्यति । बिभयाञ्चकार (८) बिभाय । भेता । भेष्यति । बिभेतु । बिभितात्, बिभीतात् । अबिभेत् । बिभियात् बिभीयात् । भीयात् । अभैषीत् । अभेष्यत् । **ह्री लज्जायाम्** । जिह्रेति । जिह्रीतः । जिह्रियति(९) । जिह्रयाञ्चकार, जिह्राय । ह्रेता । ह्रेष्यति । जिह्रेतु । अजिह्रेत् । जिह्रीयात् । ह्रीयात् । अह्रैषीत् । अह्रेष्यत् ।। **पृ पालनपूरणयोः ॥**

**अर्तिपिपर्त्योश्च ७।४।७७**

अभ्यासस्य इत्स्यात् श्लौ । पिपर्ति ॥

---

(१) दानञ्चेह प्रक्षेपः, स च प्रकृते–अग्न्यादौ हविरादीनाम् ।
(२) अभ्यासहकारस्य 'कुहोश्चुः' इति चुत्वम् ।
(३) 'अदभ्यस्तात्' इति झस्याऽत् ।
(४) द्वित्वादि ।
(५) आमोऽभावपक्षे–जुहाव, जुहुवतुः, जुहुवुः, इत्यादि ।
(६) 'हुझल्भ्यो हेर्धिः' इति धिः ।
(७) 'सिजभ्यस्त......' इति जुस्, 'जुसिचेति गुणः ।
(८) 'भीह्रीभृहुवाम्......' इति सूत्रेणाऽऽम् श्लाविव कार्यंच ।
(९) 'अदभ्यस्तात्' इति अत्, अचिश्नु······' इतीयङ ।

**उदोष्ठ्य पूर्वस्य ७।१।१०२**

अङ्गावयवौष्ठ्यपूर्वो य ऋृत्तदन्तस्याङ्गस्य उः।।

**हलि च ८।२।७७**

रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि । पिपूर्तः । पिपुरति । पपार ।।

**शॄप्रां ह्रस्वो वा ७।४।१९**

एषां किति ह्रस्वो वा स्यात् । पप्रतुः । पप्रुः ।

**ऋच्छत्यृताम् ७।४।११**

तौदादिकऋच्छेर्ऋधातोर्ॠतां च गुणो लिटि । पपरतुः । पपरुः ।।

**वृतो वा ७।२।३८**

वृङ वृञ्भ्यामृदन्ताच्चेटो दीर्घो वा स्यान्नतु लिटि । परिता, परीता। परिष्यति, परीष्यति। पिपर्तु । पिपुरतु । अपिपः। अपिपूर्ताम्। अपिपरुः (१) । पिपूर्यात् । पिपूर्याताम्। पिपूर्युः। पूर्यात् । अपारीत् ।।

**सिचि च परस्मैपदेषु ७।२।४०**

अत्र वृत इटो न दीर्घः । अपारिष्टाम् । अपरिष्यत्, अपरीष्यत् । **ओहाक् त्यागे।** जहाति ।

**जहातेश्च ६।४।११६**

इद्वास्याद्धलादौ क्ङिति सार्वधातुके । जहितः।

**ईहल्यघोः ६।४।११३**

श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि नतु घोः। जहीतः। जहति (२) । जहौ । हाता । हास्यति । जहातु। जहितात्, जहीतात् ।

**आच हौ ६।४।११७**

जहातेराच्चादिदीतौ स्तः। जहाहि, जहिहि, जहीहि (३)। अजहात् । अजहीताम्। अजहुः।

**लोपो यि ६।४।११८**

जहातेरालोपो यादौ सार्वधातुके । जह्यात् । एर्लिङीति एत्वम् । हेयात् । अहासीत् । अहास्यत् ।। **ऋ गतौ ।** इयर्ति (४)। इयृतः। इयृति । आर । आरतुः। आरुः। इडत्यर्तीति

---

(१) 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् ।

(२) झस्य अत्, "श्नाभ्यस्तयोरिति आलोपः।

(३) आत्वे जहाहि, इत्वे जहिहि । ईत्वे जहीहि ।

(४) अर्तिपिपर्त्योश्चेति–अभ्यासस्य इत्वे, अभ्यासस्यासवर्णे-इति-इयङ तदुत्तरस्यतु गुणः।

नित्यमिट्। आरिथ । अर्ता । अरिष्यति । इयर्तु । इयराणि। ऐयः (१)। ऐयृताम्। ऐयरुः। इयृयात्। अर्यात्। आरत्। आरिष्यत्। ॥ **माङ माने शब्दे च ॥**

**भृञामित् ७।४।७६**

भृञ्, माङ ओहाङ एषामभ्यासस्येत्स्या च्छ्लौ। मिमीते। मिमाते। श्नाभ्यस्तेति आतोलोपः। मिमते। ममे। माता। मास्यते। मिमीताम्। अमिमीत। मिमीत। मासीष्ठ। अमास्त। अमास्यत॥ **ओहाङ गतौ**। जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते। जिहीताम्। अजिहीत। जिहीत। हासीष्ट। अहास्त। अहास्यत। **डुभृञ् धारणपोषणयोः**। बिभर्ति। बिभृतः। बिभ्रति। बिभृते। बिभ्राते। बिभ्रते। बिभराञ्चकार, बभार। बभर्थ। बभृव। बिभराञ्चक्रे, बभ्रे। भर्ता। भरिष्यति। भरिष्यते। बिभर्तु। बिभराणि। बिभृताम्। अबिभः। अबिभृताम्। अबिभरुः। अबिभृत। बिभृयात्। बिभ्रीत। भ्रियात्। भृषीष्ट। अभार्षीत्। अभृत। अभरिष्यत्। अभरिष्यत॥ **डुदाञ् दाने**। ददाति। दत्तः। ददति। दत्ते। ददाते। ददते। ददौ। ददे (२)। दाता। दास्यति। दास्यते। ददातु। देहि (३)। दत्ताम्। अददात्। अदत्त। दद्यात्। ददीत। देयात् (४)। दासीष्ट। अदात् (५)। अदाताम्। अदुः (६)।

**स्थाघ्वोरिच्च १।२।१७**

अनयोरिदन्तादेशः सिच्च किदात्मनेपदेषु। अदित। अदास्यत्। अदास्यत। **डुधाञ् धारणपोषणयोः** (७)॥ दधाति।

---

(१) 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्य-इत्वम् 'सार्वधातुका....' इति ऋकारस्य गुणः 'अभ्यासस्याऽसवर्णे' इतीयङ 'इतश्च' इति इकारलोपः, हल्ङ्याविति तलोपः। रेफस्य विसर्गः, आटश्चेति वृद्धिः,– ऐयः।
(२) 'आतो लोप इटि च' इत्याकारलोपः।
(३) 'घ्वसोरेद्धा ...' इति–एत्वम्, अभ्यासलोपश्च।
(४) 'एर्लिङि'
(५) 'गातिस्थाघुपा....' इति सिचो लुक्।
(६) 'आतः' इति जुस् 'उस्य पदान्तात्' इति पररूपम्।
(७) अस्य चोपसर्गयोगे एवमर्थ विशेषः–
'विपूर्वो धाकरोत्यर्थे', अभिपूर्वस्तु भाषणे।
मेलने चापि सं पूर्वो नि पूर्वः स्थापने मतः॥१॥ यथा–कार्यं विदधाति,।
मधुरमभिदधाति। कुण्डले संदधाति। पादं निदधाति।

**दधस्तथोश्च ८।२।३८**

द्विरुक्तस्य झषन्तस्य धाञो बशो भष् तथयोस्ध्वोश्च परतः। धत्तः । दधति। दधासि । धत्थः । धत्ते । धत्से । धध्वे । धेहि ॥ **णिजिर् शौचपोषणयोः।**

**निजां त्रयाणां गुणः श्लौ ७।४।७५**

निज्–विज्–बिषामभ्यासस्य गुणः स्याच्छ्लौ । नेनेक्ति (१) । नेनिक्तः ।। नेनिजति। नेनिक्ते । निनेज । निक्ता । नेक्ष्यति । नेक्ष्यते । नेनेक्तु। नेनिग्धि ॥

**नाभ्यस्तस्याचि पिति सार्वधातुके ७।३।८७**

लघूपधगुणो न। नेनिजानि । नेनिक्ताम्। अनेनेक् । अनेनिक्ताम्। अनेनिजुः। अनेनिजम्। अनेनिक्त । नेनिज्यात्। नेनिजीत । निज्यात् । निक्षीष्ट। अनिजत्, अनैक्षीत्। अनिक्त । अनेक्ष्यत् । अनेक्ष्यत। एवं **विचिर् पृथग् भावे । विष्लृ व्याप्तौ** ॥

## ॥ इति जुहोत्यादयः ॥

अभ्यासः

**प्रश्न १. जुहुत इत्यत्र गुणवारणप्रकारं दर्शयत**

उ०– हु धातोर्लटि तसि सार्वधातुकत्वे शपि श्लौ तस्य लुकि द्वित्वे अभ्यासादिकार्ये ततः 'सार्वधातुकमपित्' इति ङित्वाद् गुणाभावे रुत्वविसर्गयोः 'जुहुतः' इति।

**प्रश्न २. जुहोत्यादिप्रकरणे श्लुविधानप्रयोजनं ब्रूत**

उ०– जुहोत्यादिगणस्थानां धातूनां शब्विषये द्वित्वविधानम् ।

**प्रश्न ३. जुहुधि, इति रूपं साधयत**

उ०– हु धातोः कर्तरि लोटि लस्य सिपि सेह्यदिशे सार्वधातुत्कवे शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ दित्वेऽभ्यासादिकार्ये जुहु हि इति जाते "हुझल्भ्यो हेर्धिः" इति धौ जुहुधि, इति रूपम् ।

**प्रश्न ४. जिह्रियति, इति रूपं साधयत**

उ०– ह्री धातोः कर्तरि लटि लस्य झौ सार्वधातुकत्वे शपि शपः श्लौ द्वित्वेऽभ्यासादिकार्येऽभ्यस्ततया "अदभ्यस्तात्" इति झस्यातादेशे "अचिश्नु ...." इति, इयङि जिह्रियति, इति रूपम् ।

---

(१) जश्त्वे कुत्वं चर्त्वं च।

**प्रश्न ५. पप्रतुः, इत्यस्य सिध्दिपथं दर्शयत**

उ०– पृ धातोः कर्तरि लिटि लस्य तसि तसोऽतुसादेशे "असंयोगादितिकित्वे शृदृप्रां ह्रस्वो वा" इति पाक्षिके ह्रस्वे यणि रुत्वे विसर्गे च पप्रतुः, पक्षे पपृ+अतुस् इति स्थिते "ऋच्छत्यृताम्" इति गुणे पपरतुः, इति रूपद्वयम् ।

**प्रश्न ६. भृषीष्ट, इति कथं सिध्यति ?**

उ०– भृ धातोः "आशिषिलिङि लस्यात्मनेपदसंज्ञके तादेशे सीयुटि आर्धधातुकत्वे प्राप्तस्येडागमस्यैकाच्त्वान्निषेधे यलोपे सुटि षत्वे ष्टुत्वे उश्चेति कित्वाद्गुणाभावे भृषीष्ट, इति रूपम् ।

**प्रश्न ७. अनिजत्, इत्यस्य सिध्दिपथं दर्शयत**

उ०– इरित्संज्ञकाद् निज् धातोः कर्तरि लुङि लस्य तिपि सार्वधातुकत्वे शपं प्रबाध्य च्लौ, अडागमे "इरितो वा" इति पाक्षिकेऽङि तेरिकारलोपे अनिज् अत् इति जाते ङित्वेन लघूपधगुणाभावे अनिजत्, इति रूपम् ।

## अभ्यासार्थ प्रश्नाः

(१) अजुहवुः, पिपूर्तः, जहाहि, देहि, नेनेक्ति, नेनिजानि ऐतेषामुत्पत्तिप्रकारं सम्यक् दर्शयत।

(२) जुह्वति, पिपर्ति, जहीतः, मिमीते, अदित, धत्तः एषु विशेषसूत्राणि तेषां कार्याणि च दर्शयत ।

(३) धातुरूपाणि विलिखत
- (क) ञिभी भये इत्यस्य लटि
- (ख) पृ पालनपूरणयोः इत्यस्य लोटि
- (ग) ओहाक् त्यागे इत्यस्य लुङि
- (घ) माङ माने शब्दे च इत्यस्य लटि
- (ङ) डुदाञ् दाने इत्यस्य लिटि
- (च) डुधाञ् धारणपोषणयोः इत्यस्य विधिलिङि

(४) अधो निर्दिष्टानि वाक्यानि संशोधयत
- (क) नवविवाहिता युवतय भृशं जिह्रीन्ति
- (ख) सुखमिच्छसि चेत्तात ! आलस्यं विषवज्जही
- (ग) धान्यं मान्ति वणिक्सुतः
- (घ) धनिका निर्धनेभ्यो धनानि न अदान्
- (ङ) वयं वस्त्रमदध्महो

(५) जुव्हति अविभेत् , ऐयरुः, अमृत, दद्यात् एतानि क्रियापदानि संस्थाप्य पृथक् पञ्च वाक्यानि विरचयत ।

# अथ दिवादिगणः

**दिवु क्रीडा–विजिगीषा–व्यवहार–द्युति– स्तुति–मोद–मद–स्वप्न–कान्ति –गतिषु ।**

**दिवादिभ्यः श्यन् ३।१।६९**

कर्तरि सार्वधातुके । शपोऽपवादः । हलिचेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । एवं **षिवु तन्तुसन्ताने** ।

**सिवादीनां (१) वाड्व्यवायेऽपि ८।३।७१**

परिनिविभ्यः परेषामेषां सस्य षो वा । पर्यषीव्यत्, पर्यसीव्यत् । **नृती गात्रविक्षेपे** । नृत्यति । ननर्त । नर्तिता ।

**सेऽसिचि कृत–चृत–छृद–तृद–नृतः ७।२।५७**

एभ्यः सिज्भिन्नस्य सादेरार्धधातुकस्येड् वा । नर्तिष्यति, नर्त्स्यति । नृत्यात् । अनर्तीत् (२) । **त्रसी उद्वेगे** । वा भ्राशेति श्यन्वा । त्रस्यति, त्रसति । तत्रास ।

**वा जृभ्रमु–त्रसाम् ६।४।१२४**

एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा । त्रेसतुः । तत्रसतुः । त्रेसिथ, तत्रसिथ । त्रसिता । **शो तनूकरणे** ।

**ओतः श्यनि ७।३।७१**

लोपः श्यनि । श्यति । श्यतः । श्यन्ति । शशौ (३) । शशतुः । शशुः । शाता । शास्यति । अशात् । अशाताम् । इट्सकौ । अशासीत् । अशासिष्टाम् । **छो छेदने** । छयति । **षो अन्तकर्मणि** । स्यति (४) । ससौ । सेयात् (५) । **दो अवखण्डने** । द्यति । ददौ । देयात् । अदात् । **व्यध ताडने** । विध्यति (६) । विव्याध । विविधतुः । विव्यद्ध, विव्यधिथ । व्यद्धा ।

---

(१) सिवु–सह–सुट्–स्तु–स्वञ्जः, इति सिवादयः ।

(२) वदव्रजेति प्राप्ताया वृद्धेः 'नेटि' इति निषेधः, 'पुगन्तेति' गुणे अनर्तीत् ।

(३) 'आदेच उपदेशेऽशिति' इति 'आत्वे' णल औत्वम् ।

(४) 'धात्वादेः षः सः' इति सत्वम् ।

(५) 'मास्थादिष्वस्य पाठात्' एलिङि इति–एत्वम् लुङि 'विभाषाघ्रा धेट्शाच्छासः' इति सिचो लुक् वा असात्, पक्षे 'यमरमेति इट्सकौ–असासीत् ।

(६) श्यनः 'सार्वधातुकमपित्' ङित्वे 'ग्रहिज्या....' इति सम्प्रसारणम् ।

व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् । **पुष पुष्टौ** । पुष्यति । पुपोष । पुपोषिथ । पौक्ष्यति । पुषादीत्यङ । आपरस्मैपदात् । अपुषत् । **शुष शोषणे** । शुष्यति । शुशोष । अशुषत् । **णश अदर्शने** । नश्यति । ननाश । नेशतुः (१) ।

**रधादिभ्यश्च ७।२।४५**

रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् । नेशिथ ।

**मस्जि–नशोर्झलि ७।१।६०**

नुम् स्यात् । ननंष्ठ (२) । नेशिव, नेश्व । नशिता, नंष्टा । नशिष्यति, नङ्क्ष्यति (३) । नश्येत् । नश्यात् । अनशत् । प्रणश्यति (४) ।

**नशेः षान्तस्य ८।४।३६**

णत्वं न । प्रनंष्टा । अन्तग्रहणं भूतपूर्व प्रतिपत्त्यर्थम् । प्रनङ्क्ष्यति । **रध हिंसा-संराध्योः** ।

**रधि–जभोरचि ७।१।६१**

नुम् । ररन्ध । ररन्धतुः । ररन्धिथ, ररद्ध । ररन्धिव, रेध्व ॥

**नेट्य लिटिरधेः ७।१।६२**

लिट्वर्जे इटिरधेर्नुम्न । रधिता, रद्धा । रधिष्यति, रत्स्यति । अङि नुम् । अनिदितामिति नलोपः । अरधत् । **तृप प्रीणने** । तृप्यति । ततर्प्थ (५), ततर्प्थ, ततर्पिथ । तर्पिता, तर्प्ता त्रप्ता । (स्पृश–मृश्–कृष्–तृप्–दृपां च्लेः सिज्वा वाच्यः) अतर्पीत् (६), अत्राप्सीत्, अतार्प्सीत्, अतृपत् । **दृप हर्षमोहनयोः** । दृप्यति । रधादित्वादिमौ वेट्कावमर्थमनुदात्तता । **द्रुध जिघांसायाम्** । द्रुह्यति । वा द्रुहेति वाघः । पक्षे ढः । दुद्रोग्ध, दुद्रोढ, दुद्रोहिथ । द्रोहिता, द्रोग्धा, द्रोढा । अद्रुहत् । **मुह वैचित्ये** । वैचित्यमविवेकः । मुह्यति । मुमोहिथ, मुमोग्ध, मुमोढ । मोहिता मोग्धा,

---

(१) 'अत एक हल्मध्ये....' इति एत्वाभ्यासलोपौ ।

(२) नुमि ननंश् थ' इत्यत्र व्रश्चेति शस्य षत्वे ष्टुत्वम् ।

(३) इडभावे 'व्रश्च भ्रस्ज....' इति शस्य षत्वम्, 'षढोः कः सि' इति कत्वे परस्य सस्य षत्वे कष संयोगे क्षः । नुमः, अनुस्वारपरसवर्णौ ।

(४) 'उपसर्गादसमासेऽपि....' इति णत्वम् ।

(५) इडभावपक्षे 'अनुदात्तस्य चर्दुपध 'स्या....' इति वैकल्पिकोऽम् । पक्षे गुणः ।

(६) 'रधादिभ्यश्च' इति वैकल्पिके–इटि ईटि च गुणः, 'इट ईटि' इति सिज् लोपः । अतर्पीत् । इडभावपक्षे वैकल्पिके अमि उपधावृद्धौ अत्राप्सीत् सिजभावपक्षे पुषादित्वादङ ।

मोढा । मोहिष्यति, मोक्ष्यति । अमुहत् । **ष्णुह् उद्गिरणे** । स्नुह्यति । सुष्णोह । सुष्णोहिथ, सुष्णोग्ध, सुष्णोढ । सुष्णुहिव, सुष्णुह्व । स्नोहिता, स्नोग्धा, स्नोढा । स्नोक्ष्यति । अस्नुहत् । **ष्णिह प्रीतौ** । स्निह्यति । सिष्णेह । स्नेहिता, स्नेग्धा, स्नेढा । अस्निहत् । **तुष तुष्टौ** । तुष्यति । **दुष वैकृत्ये** । दुष्यति । **श्लिष आलिङ्गने** । श्लिष्यति ।

**श्लिष आलिङगने ३।१।४६**

च्लेः क्सः । अश्लिक्षत् कन्यां देवदत्तः । आलिङ्गने किम्– समश्लिषत् जतु काष्ठम् । प्रत्यासत्ताविह श्लिषिः । **क्रुध क्रोधे** । क्रुध्यति । **क्षुध बुभुक्षायाम्** । क्षुध्यति । **शुध शौचे** । शुध्यति । **षिधु संराद्धौ** । सिध्यति । **शमु उपशमे** ।

**शमामष्टानां दीर्घः श्यनि ७।३।७४**

शम् तम् दम् श्रम् भ्रम् क्षम् क्लम्–मदामचो दीर्घः श्यनि । प्रणिशाम्यति । शेमतुः । शेमुः । शेमिथ । शमिता । अशमत् । **तमु काङक्षायाम्** । ताम्यति । तमिता । अतमत् । **दमु उपशमे** । दाम्यति । दमिता । अदमत् । **श्रमु तपसि खेदे च** । श्राम्यति । अश्रमत् । **भ्रमु अनवस्थाने** । वाभ्रशेति श्यन्वा । भ्राम्यति, भ्रमति । भ्रेमतुः (१), बभ्रमतुः । अभ्रमत् । **क्षमू सहने** । क्षाम्यति । चक्षमिथ (२), चक्षन्थ । चक्षमिव, चक्षण्व (३) । क्षमिता, क्षन्ता । अयं न षित् । भ्वादिस्तु षित् । अषितः–क्षाम्यतेः, क्षान्तिः क्षमूषः क्षमतेःक्षमा । **क्लमु क्लान्तौ** । ष्ठिवुक्लमुचमामिति दीर्घः । क्लाम्यति, क्लामति । क्लमिता । अक्लमत् । **मदी हर्षे** । माद्यति । अमदत् । **असु क्षेपणे** । अस्यति । आस । असिता । अस्यतीत्यङ ।

**अस्यतेस्थुक् ७।४।१७**

अङि । आस्थत् । **यसु प्रयत्ने** ।

**यसोऽनुपसर्गात् ३।१।७१**

**संयसश्च ३।१।७२**

यस्यति, यसति । संयस्यति, संयसति । अनुपसर्गात्किम् । प्रयस्यति । **जसु मोक्षणे** । जस्यति । **तसु उपक्षये** । **दसु च** । तस्यति । अतसत् । दस्यति । अदसत् । **वसु स्तम्भे** । वस्यति । न शसददेति निषेधः । ववास । ववसतुः । वसादिरिति मते तु । वेसतुः । वेसुः । **व्युष विभागे** ।

---

(१) 'वाजॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपौ वैकल्पिकौ ।

(२) ऊदित्वाद्वेट् ।

(३) म्वोश्चेति नत्वे णत्वम् ।

ब्युष्यति । **विस प्रेरणे** । विस्यति । अविसत् । **वुस उत्सर्गे** । वुस्यति । **मुस खण्डने** । मुस्यति । **मसी परिणामे** । परिणामो = विकारः । **लुठ विलोडने** । लुठ्यति । **उच समवाये** । उच्यति । उवोच(१) । ऊचतुः । ऊचुः । **भृशु भ्रंशु अधःपतने** । भृश्यति । बभर्श । अभृशत्(२) । अनिदितामिति नलोपः । भ्रश्यति । बभ्रंश । अभ्रशत् । **कृश तनूकरणे** । कृश्यति । **ञि तृषा-पिपासायाम्** । तृष्यति । **हृष तुष्टौ** । श्यन्नङौ भौवादिकाद्विशेषः । हृष्यति । अहृषत् । **रुष-रिष हिंसायाम्** । तीषेतिवेट् । रोषिता, रोष्टा । रेषिता, रेष्टा । **कुप क्रोधे** । कुप्यति । **गुप व्याकुलत्वे** । **लुभ गार्ध्ये** । गार्ध्यमाकाङ्क्षा । लोभिता, लोब्धा(३) । लोभिष्यति । भ्वादेरवृत्करणाल्लोभतीत्यप्याहुः(४) । **क्षुभ संचलने** । क्षुभ्यति । **क्लिदू आर्द्रीभावे** । क्लिद्यति । चिक्लेदिथ, चिक्लेत्थ । चिक्लिदिव । चिक्लिद्व । चिक्लिदिम । चिक्लिद्म । **ञिमिदा स्नेहने** ।

**मिदेर्गुणः ७।३।८२**

मिदेरिको गुण इत्संज्ञक शकारादौ प्रत्यये । मेद्यति । अमिदत् । **ञिक्ष्विदा स्नेहनमोचनयोः** । क्ष्विद्यति । **ऋधु वृद्धौ** । ऋध्यति । आनर्ध(५) । **गृधु अभिकाङ्क्षायाम्** । गृध्यति । अगृधत्

**इति परस्मैपदिनः ।**

**षूङ प्राणिप्रसवे** । सूयते । सुषुवे । क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सोता(६), सविता । **दूङ परितापे** । **दीङ क्षये** ।

**दीङो युडचि क्ङिति ६।४।६३**

दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् । (**वुग्युटावुवङ्यणोः (७) सिध्दौ वक्तव्यौ**) दिदीये ।

---

(१) उच् + अ, द्वित्वे, गुणे 'अभ्यासस्याऽसवर्णे' इत्युवङ ।
(२) पुषादित्वादङ 'अनिदितामिति नलोपः ।
(३) 'तीषसह लुभ....' वेट् इडभावे रूपम्, भस्य जश्त्वम् ।
(४) भ्वादिगणस्याऽवृत्करणात् = असमापनात् समाप्तेरभावादिति यावत् (भ्वादिराकृतिगणः) तेन शपि लोभतीत्यपि रूपम् ।
(५) ऋकारैकदेशो रेफो हल्त्वेन गृह्यते, तेन 'तस्मान्नुड....' इति नुट् ।
(६) स्वरतिसूतिसूयति..' इति वेट् ।
(७) युट आभीयत्वेनाऽसिद्धत्वात् 'एरनेकाच..' इति यण् प्राप्तः, सः, माभूदित्येतदर्थमिदं वार्तिकम् ।

**मीनाति-मिनोति-दीङां ल्यपि च ६।१।५०**

एषामात्वं ल्यपि चादशित्येज्निमित्ते । दाता । दास्यते । (स्थाघ्वोरित्वेदीङः प्रतिषेधः) अदास्त । **डीङ विहायसा गतौ** । डीयते । **पीङ पाने** । पीयते । **माङ माने** । मायते । ममे । माता । **जनी प्रादुर्भावे** ।

**ज्ञा-जनोर्जा ७।३।७९**

शिति । जायते । गमहनजनेति उपधालोपः । 'स्तोः श्चुनाश्चुः' । जज्ञे(१) । जनिता । जनिष्यते ।

**दीप-जन-बुध-पूरि–तायि–प्यायिभ्योऽन्यतरस्याम् ३।१।६१**

एभ्यश्च्लेश्चिण् वा एकवचने तशब्दे परे ।

**चिणो लुक् ६।४।१०४**

चिणः परस्य तशब्दस्य लुक् ।

**जनि–वध्योश्च ७।३।३५**

न वृद्धि श्चिणि ञ्णिति कृति च । अजनि, अजनिष्ठ । **दीपी दीप्तौ** । दीप्यते । दिदीपे । अदीपि, अदीपिष्ट । **पद गतौ** । पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट ।

**चिण्ते पदः ३।१।६०**

अपादि । अपत्साताम् । अपत्सत । **विद सत्तायाम्** । विद्यते । वेत्ता । **बुध अवगमने** । बुध्यते । बोद्धा(२) । एकाचो बशोभष् झषन्तस्येति भष्भावः भोत्स्यते । भुत्सीष्ट । अबोधि(३), अबुद्ध । अभुत्साताम् । **युध संप्रहारे** । युध्यते । युयुधे । योद्धा । अयुद्ध । **सृज विसर्गे** । सृज्यते । ससृजे । सृजिदृशोर्झल्यमकिति, इत्यमागमः । स्रष्टा(४) । स्रक्ष्यते । सृक्षीष्ट । लिङसिचाविति कित्वम् । असृष्ट । असृक्षाताम् । **मीङ हिंसायाम्** । मीयते । **रीङ श्रवणे** । रीयते । **लीङ श्लेषणे** । लीयते ।

---

(१) द्वित्वे हलादिशेषे जजन् ए, इत्यत्र 'गमहनजन.., इति उपधालोपे श्चुत्वेन नस्य ञत्वे जञोर्ज्ञः जज्ञे ।

(२) लघूपधगुणः, तकारस्य धत्वम् ।

(३) 'दीपजनबुध.., इति श्लेश्चिण् विकल्पेन ।

(४) अमोमित्वाद् ऋकारात्परत्वम्, जकारस्य षत्वम्, तकारस्य ष्टुत्वम्, यण्

सृजिदृशोर्झल्यमकिति, इत्यमागमः। स्रष्टा (१)। स्रक्ष्यते। सृक्षीष्ट। लिङसिचाविति कित्वम्। असृष्ट। असृक्षाताम्। **मीङ हिंसायाम्**। मीयते। **रीङ श्रवणे**। रीयते। **लीङ श्लेषणे**। लीयते।

**विभाषा लीयते ६।१।५१**

लीयतेरिति यका (२) निर्देशो नतु श्यना। लीलीङोरात्वं स्यादेज्विषये ल्यपिच लेता, लाता। लेष्यते, लास्यते। एज्विषये किम्। लीयते। लिल्ये। **वृङ वृणोत्यर्थे**। व्रीयते। विव्रिये

**॥ इत्यात्मनेपदिनः ॥**

**मृष तितिक्षायाम्**। मृष्यति। मृष्यते। ममर्षिथ। ममृषे। ममृषिषे। मर्षितासि, मर्षितासे। **णह बन्धने**। नह्यति, नह्यते (३)। ननाह। 'नहो धः' इति हस्य धः। ननद्ध। नेहे। नद्धा। नत्स्यति (४)। अनात्सीत्। अनद्ध। **रञ्ज रागे**। रज्यति (५)। रज्यते। **शप आक्रोशे**। शप्यति। शप्यते। **शक विभाषितो मर्षणे**। विभाषित इत्युभयपदीत्यर्थः। शक्यति, शक्यते, हरिं द्रष्टुं भवतः। शशाक। शेकिथ, शशक्थ। शेके। शक्ता। शक्ष्यति। शक्ष्यते। पुषादित्वादङ अशकत्। अशक्त। सेट्कोऽयमित्येके। तन्मतेनाऽनिट्केषु लृदित्पठितः। शकिता। शकिष्यति। शकिष्यते।

**॥ इति दिवादिः ॥**

अभ्यासः

**प्रश्न १. श्यनि शित्त्व फलं निगद्यताम्**

उ०— श्यनः शित्वात्, दीव्यतीत्यादौ गुणाभावः।

**प्रश्न २. अदेवीत्, इत्यत्र लघूपधगुणप्रवृत्तिं स्पष्टयत**

उ०— अत्र अदिव् ईत्, इत्यवस्थायां हलन्त लक्षणाया वृद्धेः नेटि, इति निषेधात्, आर्धधातुकसंज्ञा प्रयुक्तो लघूपधगुणो ज्ञेयः।

---

(२) सार्वधातुके यक्' इति विहितेन यका नतु श्यना अन्यथा लीङिन्त्येव ब्रूयात्। लीलीङोरुभयोरप्यात्वम्।

(३) णो नः।

(४) 'नहो धः' इति हस्य धत्वे चर्त्वम्, नत्स्यति।

(५) 'अनिदिताम्......' इति नलोपः।

**प्रश्न ३. नर्तिष्यति, इत्यस्य सिद्धिपथं दर्शयत**

उ०– नृत् धातोः कर्तरि लृटि लस्य तिपि सार्वधातुकसंज्ञां प्रबाध्य स्य प्रत्यये आर्धधातुकत्वे नित्ये, इडागमे प्राप्ते "सेऽसिचि कृत–चृत–छृद–तृद–नृतः" इति पाक्षिके, इटि लघूपधगुणे षत्वे नर्तिष्यति, पक्षे नर्त्स्यति, इति रूपद्वयम् ।

**प्रश्न ४. त्रेसतुः, इति कथं सिध्यति ?**

उ०– उद्वेगार्थकात् त्रस् धातोः कर्तरि लिटि लस्य तसि तसोऽतुसि आर्धधातुकत्वेऽसंयोगादिति कित्वे द्वित्वेऽभ्यासत्वे "वा ज-भ्रमु-त्रसाम्" इति पाक्षिकयोरेत्वाभ्यासलोपयोः त्रेसतुः, पक्षे तत्रसतुः, ।

**प्रश्न ५. ननंष्ठ, इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ०– नश् धातोः कर्तरि लिटि लस्य सिपि थलि आर्धधातुकत्वे "रधादिभ्यश्चेति पाक्षिके, इटि द्वित्वेऽभ्यासत्वे "थलि च सेटि" इति एत्वाभ्यासलोपयोः नेशिथ, पक्षे द्वित्वेऽभ्यासादिकार्ये न न श् थ इति जाते "मस्जिनशोर्झलीति नुमि न न न् श् थ इति दशायां व्रश्चेति शस्य षत्वे ष्टुत्वेऽनुस्वारे च ननंष्ठ इति रूपद्वयम् ।

**प्रश्न ६. रधिता, इति कथं सिध्यति ?**

उ०– रध् धातोः कर्तरि लुटि लस्य तिपि सार्वधातुकत्वे प्राप्तं शपं प्रबाध्य तासि प्रत्यये, आर्धधातुकत्वे "रधादिभ्यश्च" इति पाक्षिके इटि "रधिजभोरचि" इति प्राप्तस्य नुमः "नेट्यलिटिरधेः" इति निषेधे तेर्डादेशेऽनुबन्धलोपे डित्वाट्टिलोपे रधिता, पक्षे रद्धा, इति रूपद्वयम् ।

**प्रश्न ७. अश्लिक्षत्, इति निष्पादयत**

उ०– श्लिष् धातोः कर्तरि लुङि अटि लस्य तिपि सार्वधातुकत्वे शपं प्रबाध्य च्लौ "शल इगुपधानिटः क्सः" इति क्से "षढोः कः सि" इति कत्वे षत्वे क्षत्वे तेरिकारलोपे लघूपधगुणस्य कित्व प्रयुक्ततया क्ङिति चेति निषेधे अश्लिक्षत्, इति रूपम् ।

## अभ्यासार्थं प्रश्नाः

(१) **पर्यषीव्यत्, नर्तिष्यति, त्रेसतुः, नेशिथ, ननंथ ररन्ध, अतर्पीत्, प्रणिशाम्यति, दाता, जायते, अपादि, एतेष सिध्दिपथं दर्शयत ।**

(२) दीव्यति, इत्यत्र लघूपधगुणाभावकारण् किम् ?

(३) श्यति अस्य सिद्धौ केन सूत्रेण धातोरोकारलोपो विधीयते ?

(४) प्रनंष्ठ इत्यत्र केन सूत्रेण प्राप्तं णत्वं केन निषिद्धम् ?

(५) अश्लिक्षत् इत्यत्र कस्मिन्नर्थे केन सूत्रेण क्सो विहितः ?

(६) अजनि इत्यत्र प्राप्तोपधावृद्धिं किं सूत्रं न्यषेधीत् ?

(७) हृष तुष्टौ इत्यस्य धातो र्नवसु लकारेषु प्रथमपुरुषस्यैकवचने जातानि रूपाणि विलिख ।

(८) ननर्त, पुष्यामः, डीयन्ते, जायध्वे, अनुध्यन्त एतानि क्रियापदानि प्रयुज्य पृथक् पञ्च वाक्यानि विरचयत ।

(९) नृत्यामि, छाता, शुष्यावः, अजनिष्ट, बुबुधे, एतानि क्रियापदानि केषु लकारेषु, केषु पुरुषेषु केषु वचनेषु जायन्ते स्पष्टं कथयत ।

# अथ स्वादिगणः

**षुञ् अभिषवे।**

**स्वादिभ्यः श्नुः ३।१।७३**

कर्तरि सार्वधातुके । शापोऽपवादः । सुनोति । सुनुतः । हुश्नुवोरिति यण् । सुन्वन्ति । लोपश्चास्येति प्रत्ययोतो वा लोपः । सुन्वः, सुनुवः । सुनुते । सुन्वते (१) । सूनुषे । सुषाव । सुषुवे । सोता । सुनु । सुनवानि (२) । सुनवै । सुनुयात् ।

**स्तु-सु-धूञ्भ्यः परस्मैपदेषु ७।२।७२**

सिच इट् । असावीत् । असोष्ट । अभिषुणोति (३) । अभ्यषुणोत् ।

**सुनोतेः स्यशनोः ८।३।११७**

सस्य षो न । विसोष्यति । **षिञ् बन्धने ।** विसिनोति । **चिञ् चयने ।** चिनोति । चिनुते ।

**विभाषा चेः ७।३।५८**

अभ्यासाच्चेः कुत्वं वा सनि लिटि च । चिकाय, चिचाय । चिक्ये चिच्ये । अचैषीत् । अचेष्ट । **स्तृञ् आच्छादने ।** स्तृणोति, स्तृणुते । तस्तार (४), तस्तरे । गुणोर्तीति गुणः । स्तर्यात् ।

**ऋतश्च संयोगादेः ७।२।४३**

ऋदन्तात्संयोगादे लिङ्सिचोरिड् वा ताङि । स्तरिषीष्ट, स्तृषीष्ट (५) । अस्तरिष्ट । अस्तृत (६) । **धुञ् कम्पने** । धुनुते, धुनोति । दुधाव, दुधुवे । अधौषीत् । अधोष्यत् । **धूञ् कम्पने** । धूनोति । धूनुते । स्वरतीति वेट् । दुधविथ, दुधोथ । किति लिटि तु ॥

---

(१) 'आत्मनेपदेष्वनतः, इति झस्याऽत् ।

(२) 'आडुत्तमस्य' इति–आटि कृते 'हुश्नुवोरिति यणं बाधित्वा परत्वाद् गुणः ।

(३) उपसर्गात्सुनोति ....' इति षत्वे णत्वम् अभ्यषुणोदित्यत्र 'अडभ्यास व्यवायेऽपि' । इति षत्वम् ।

(४) ऋतश्च संयोणादेर्गुणः इति गुणे वृद्धि ।

(५) 'उश्चेति कित्वान्न गुणः ।

(६) ह्रस्वादङ्गादिति सिचो लोपः ।

**श्र्युकः किति ७।२।११**

श्रिञ एकाच उगन्ताच्च गित्कितोरिण्न । इति प्राप्ते । क्रादिनियमान्नित्यमिट् (१) । दुधुविव । दुधुविम । अधावीत्, अधविष्ट, अधोष्ट ॥ **कृञ् हिंसायाम्** । कृणोति, कृणुते । चकार । चकर्थ । चक्रे । क्रियात् । कृषीष्ट । अकार्षीत् । अकृत । **वृञ् वरणे** । वृणोति । वृणुते ।

**बभूथाततन्थ–जगृम्म–ववर्थेति निगमे ७।२।६४**

एषां वेद इड्भावो निपात्यते । तेन भाषायां थलीट् । ववरिथ, ववृव । ववृवहे । वृतो वा । वरीता, वरिता ।

**लिङसिचोरात्मनेपदेषु ७।२।४२**

वृङवृञ्भ्याभृदन्ताच्च परयोर्लिङसिचोरिड् वा तङि ।

**न लिङि ७।२।३९**

वृतो लिङ इटो न दीर्घः । वरिषीष्ट, वृषीष्ट । अवारीत् । अवरिष्ट, अवृत ।
**टुदु उपतापे** । दुनोति ॥ **हि गतौ वृद्धौ च** ।

**हिनुमीना ८।४।१५**

उपसर्गस्थान्निमित्तात्परस्यैतयो र्नस्य णः । प्रहिणोति ॥

**हेरचङि ७।३।५६**

अभ्यासाद् हिनोतेर्हस्य कुत्वं नतु चङि । जिघाय ॥ **आप्लृ व्याप्तौ** । आप्नोति । आप्नुतः । आप्नुवन्ति । आप्नुवः । आप्नुहि (२) । लृदित्वादङ । आपत् । **शक्लृ शक्तौ** । अशकत् । **राध साध संसिद्धौ** । राध्नोति ।

**राधो हिंसायाम् ६।४।१२३**

एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । अपरेधतुः । अपरेधुः । रेधिथ । राद्धा । साध्नोति । ससाध । साद्धा । आसात्सीत् । असाद्धाम् । **ञिधृषा प्रागल्भ्ये** । धृष्णोति । दधर्ष ।

---

(१) 'स्वरतिसूतिसूयति ....' इति विकल्पो यद्यपिपरः' तथापि 'अर्धधातुकस्ये ....' इति विधिकाण्डारम्भात् प्रागेव 'नेऽवशि कृति श्र्युकः किति इत्यादि प्रतिषेध काण्डारम्भ सामर्थ्यात् अयं श्र्युकः किति निषेधः स्वरत्यादि विकल्पं बाधते । इति नित्यमिट् ।

(२) असंयोगपूर्वत्वान्न हेर्लुक् ।

धर्षिता । **दम्भु दम्भने** । (१) अनिदितातिमि न लोपः। दभ्नोति । ददम्भ । (**श्रन्थि-ग्रन्थि-दम्भि-स्वञ्जीनां लिटः कित्वं वा**) कित्व पक्षे नलोपः । तस्याभीयत्वादसिद्धत्वेनैत्वाभ्यास-लोपयोरप्राप्तौ । (**दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ**) देभतुः, ददम्भतुः । दम्भिता । दभ्यात् । **तृप प्रीणने** ।

**क्षुभ्नादिषु च ८।४।३९**

न णत्वम् । तृप्नोति । ततर्प ॥ **अशू व्याप्तौ संघाते च** । अश्नुते ॥

**अश्नोतेश्च(२) ७।४।७२**

दीर्घादभ्यासादवर्णात्परस्य नुट् । आनशे । अशिता । अष्टा । अशिष्यते । अक्ष्यते । अश्नुवीत (३) । अक्षीष्ट, (४) अशिषीष्ट । आशिष्ट, आष्ट । अक्षाताम् ॥

## ॥ इति स्वादिः ॥

### अभ्यासः

**प्रश्न १. सुन्वन्ति, इत्यस्य साधनप्रक्रियां सम्यग् दर्शयत**

उ०– 'षुञ्' धातोर्लटि झावन्तादेशे सार्वधातुकत्वे शपं प्रबाध्य स्नौ तस्य सार्वधातुकत्वे ङित्वे च ङित्वादगुणे 'हुश्नुवोः सार्वधातुके'' इति यणि सुन्वन्ति इति ।

**प्रश्न २. षुञ् धातोरर्थं ञित्वफलं च प्रतिपादयत**

उ०– 'षुञ्' धातोरर्थोऽभिषवः । अभिषवस्तु स्नपनं पीडनं स्नानं सुरासन्धानं च ।

**प्रश्न ३. सुन्वते, इति प्रयोगं साधयत**

उ०– सु धातोः कर्तरि लटि लस्यात्मनेपदसंज्ञके झादेशे सार्वधातुकत्वे शपं प्रबाध्य ''स्वादिभ्यः श्नुः'' इति श्नु प्रत्ययेऽनुबन्धलोपे तस्यापि सार्वधातुकत्वे ''सार्वधातुकमपित्'' इति ङित्वे सोरुकारस्य प्राप्तस्य गुणस्य ङित्व प्रयुक्ततया क्ङितिचेति निषेधे झस्यान्तादेशं प्रबाध्य ''आत्मनेपदेष्वनतः'' इति अतादेशे ''हुश्नुवोरिति यणि टेरेत्वेच सुन्वते, इति रूपम् ।

---

(१) लोकवञ्चनाय विहितकर्मानुष्ठानं = दम्भः ।

(२) अत्र श्नुविकरण निर्देशः क्र्यादिगणस्थस्य 'अशभोजने' इत्यस्य वारणार्थः ।

(३) अत्र संयोगपूर्वत्वात् 'हुश्नुवोरिति' यण् न किन्तूवङ ।

(४) ऊदित्वादिड्विकल्पः । व्रश्चेति षत्वे, 'षढोः कः सि' इति कः, परस्व षत्वम् क-षसंयोगे क्षः ।

**प्रश्न ४. तस्तार इति कथं सिध्यति ?**

उ०– आच्छादनार्थकात् स्तॄ धातोः कर्तरि लिटि लस्य तिपि णलि आर्धधातुकत्वे "ऋतश्च संयोगादेर्गुणः" इति गुणे द्वित्वेऽभ्यासत्वे "शर्पूर्वाः खयः' खयि शेषे तस्तर् अ इति जाते, उपधावृद्धौ तस्तार इति रूपम् ।

**प्रश्न ५. दुधुविम, इत्यस्य साधुत्वं वर्णयत**

उ०– कम्पनार्थकाद् धूञ् धातोः कर्तरि लिटि लस्योत्तमपुरुषबहुवचने मसि सार्वधातुकसंज्ञां प्रबाध्य लिट्चेति, आर्धधातुकत्वेऽसंयोगादिति कित्वे परस्मैपदानामिति मादेशे "स्वरतिसूतीत्यादिना पाक्षिके इटि प्राप्ते "श्र्युकः किति, इति निषेधे प्राप्ते क्रादि नियमान्नित्य इटि द्वित्वेऽभ्यासादि कार्ये उवङि दुधुविम इति रूपम् ।

**प्रश्न ६. आप्नुहि, इत्यस्य सिद्धिः कार्या**

उ०– आप् धातोः कर्तरि लोटि लस्य सिपि सेर्ह्यादेशे सार्वधातुकत्वे प्राप्तं शपं प्रबाध्य श्नु प्रत्यये ऽनुबन्धलोपे शित्वान् ङित्वे ङित्वप्रयुक्तगुणस्य क्ङिचेति निषेधे आप्नुहि, हेर्लुक् तु नशंकनीयः संयोगपूर्वत्वात् ।

**प्रश्न ७. अश्नुवीत, इति कथं सिध्यति**

उ०– ऊकारेत्संज्ञकात् अश् धातोः कर्तरि विधिलिङि लस्यात्मनेपदसंज्ञके तादेशे लिङः सीयुडिति सीयुटि सकारलोपे सार्वधातुकत्वे शपं प्रबाध्य श्नौ प्रत्यये अश्नु ईय् त लोपो व्योर्वलीति यलोपेऽत्रसंयोगपूर्वत्वात् हुश्नुवोरिति यण् न किन्तूवङ अश्नुवीत, इति रूपम् ।

## अभ्यासार्थं प्रश्नाः

(१) **असावीत्, तरिषीष्ट, दुधुविव, वरिषीष्ट, जिघाय, देभतुः, तृप्नोति एते प्रयोगाः प्रक्रिया प्रदर्शन पुरःसरं साधु साधनीयाः ।**

(२) **अभिषव–चयन–कम्पन–व्याप्ति–वरणार्थानां स्वादिगणस्थानां धातूनां नामानि विलिख्य तेषां लटि समग्राणि रूपाणि विलिखत ।**

(३) **अधस्तनेषु क्रियापदेषु विशिष्टकार्यकारिणां सूत्राणां समुल्लेखनं विधाय तेषां विशिष्ट-कार्याणि च दर्शयत ।**

(४) **रूपाणि विलिखत**

(क) चिञ् चयने इत्यस्य लटि उभयपदे ।

(ख) धूञ् कम्पने इत्यस्य लिटि उभयपदे ।

(ग) वृञ् वरणे इत्यस्य लिटि उभयपदे ।

(घ) आप्लृ व्याप्तौ इत्यस्त लुटि।
(ङ) दम्भु दम्भने इत्यस्य लिटि।

(५) सुनोति, अचेष्ट, धनते, वरितास्मः देमुः, अश्नू ते एतानि क्रियापदानि प्रयुज्य पृथक् षड् वाक्यानि रचयत ।

(६) संशोध्यन्तामधस्तनवाक्यानि

(क) वृक्षशाखा विधुन्वाते मुदिता वानरा वने।
(ख) क्षिप्तकालाः कुमार्यः स्वयं सत्पतिं वृनुते ।
(ग) बालिकाः प्रनिचिन्वन्ति पुष्पाणि करपङ्कजैः ।
(घ) अलसो लघु कार्यमपि न राध्नुति।
(ङ) कापुरुषः स्वल्पकेनापि साफल्येन तृप्णोति ।

# अथ तुदादिप्रकरणम्

## तत्रोभयपदिनः

**तुद व्यथने ।**

**तुदादिभ्यः शः ३।१।७७**

शपोऽपवादः। तुदति । तुदतः। तुदते । तुतोद। तुतोदिथ । तुतुदे । तोत्ता । तोत्स्यति। तोत्स्यते । तुदतु । तुदताम् । अतौत्सीत् । अतुत्त । **णुद प्रेरणे** । नुदति । नुदते । नुनोद। नुनुदे । नोत्ता । नोत्स्यति । नोत्स्यते । **भ्रस्ज पाके** । "ग्रहिज्यावयी" ति संप्रसारणम् । सस्य श्चुत्वेन शः। तस्य जश्त्वेन जः। भृज्जति । भृज्जते ।

**भ्रस्जो रोपधयोरमन्यतरस्याम् ६।४।४७**

भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्द्धधातुके । मित्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जुः। बभर्जिथ । बभर्ष्ठ । रम भावपक्षे-बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जुः। बभ्रज्जिथ । स्कोरिति सलोपः "व्रश्चे" ति षः । बभ्रष्ट। बभर्ज। बभर्जाते । बभर्जिरे । बभ्रज्जे । बभ्रज्जाते । बभ्रज्जिरे । भर्ष्टा, भ्रष्टा । भर्क्ष्यति । भ्रक्ष्यति । **(क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन)** भृज्यात् । भृज्यास्ताम् । भृज्यासुः। भर्क्षीष्ट । भ्रक्षीष्ट । अभार्क्षीत्। अभ्राक्षीत्। अभर्ष्ट(३)। अभ्रष्ट। अभर्क्ष्यत् । अभ्रक्ष्यत् । अभर्क्ष्यत, अभ्रक्ष्यत । **कृष विलेखने** । कृषति। कृषते। चकर्ष । चकृषे ।

**अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ६।१।५६**

क्रष्टा। कर्ष्टा । कृक्षीष्ट । 'पृशमृशे' ति सिज्वा। पक्षे क्सः। सिचि अम्वा । अक्राक्षीत्, अकार्क्षीत् । अकृक्षत् । अकृष्ट । अकृक्षाताम् । अकृक्षत । क्सपक्षे अकृक्षत । अकृक्षाताम् । अकृक्षन्त । **मिल संगमे** । मिलति । मिलते । मिमेल । मिमिले । मेलिता । अमेलीत् ।

---

(१) तुद्+अ+ति इत्यत्र शकारस्य अपित्त्वात् "सार्वधातुकमपित्" इति ङित्त्वाद् गुणाभावे तुदति इति ।

(२) तुद्+स+त् इत्यवस्थायां "अस्तिसिचोऽपृक्ते" इति ईटि "वदव्रज" इति वृद्धौ, चर्त्वे, अडागमे च "अतौत्सीत्" इति । आत्मनेपदे तु अतुत्त ।

(३) लुङि अटि तादेशे च्लौ सिचि रमि रोपधयोर्निवृतौ च 'झलो झलि' इति सिचः सकारलोपे 'व्रश्च' इति जस्य षत्वे ष्टुत्वे 'अभर्ष्ट' इति । रमोऽभावे ते च्लौ सिचि सलोपे जस्य षत्वे ष्टुत्वे "स्कोः" इति सरकारलोपे 'अभ्रष्ट' इति रूपम् ।

**मुच्लृ मोक्षणे ।**

**शे मुचादीनाम् ७।१।५६**

मुच् लुप् लिप् विद् सिप् सिच् कृत् खिद् पिशां नुम् । मुञ्चति । मुञ्चते । मुमुचे । मोक्ता । मोक्ष्यति । मोक्ष्यते । मुच्यात् । 'लिङ्सिचा विति' कित्त्वम् । मुक्षीष्ट । अमुचत्(१) । अमुक्त । अमुक्षाताम् । **लुप्लृ छेदने** । लुम्पति । लुम्पते । लुलोप । लुलुपे । लोप्ता २– । लोप्स्यति । लोप्स्यते । अलुपत् । अलुप्त । **विद्लृ लाभे** । विन्दति । विन्दते । विवेद । व्याघ्रभूति-मते सेट् वेदिता–२ । वेदिष्यति । वेदिष्यते । भाष्यमतेऽनिट् । परिवेत्ता । परि वर्जने । ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः । **सिच क्षरणे** । सिञ्चति । सिञ्चते । सिषेच । सिषिचे । 'लिपिसिची' त्यङ । असिचत्(१) । तङि तु वा– असिचत(२) । असिक्त (३) । **लिप उपदेहे** । उपदेहो वृद्धिः लिम्पति । लिम्पते । लिलेप । लिलिपे । लेप्ता । लेप्स्यति । लेप्स्यते । 'लिपिसिचिह्वश्चे' त्यङ । अलिपत् । अलिपत । अलिप्त ।

## ।। इत्युभयपदिनः ।

(१) 'पुषादिद्युताद्यलृदितः' इति च्लेरङि, ङित्वादगुणे ।

(२) लुङि अटि तिपि तिप इकारलोपे च्लौ 'लिपिसिचि ह्वश्च' इत्यङि ङित्वादगुणे 'असिचत्' ।

(३) लुङि तादेशे च्लौ आत्मनेपदेष्वन्यतरस्याम्' इति च्लेरङि अटि ङित्वादगुणे असिचत ।

(४) अङभावे च्लौ च्लेः सिचि 'झलो झलि' इति सलोपे 'चोः कुः' इति कुत्वेऽटि असिक्त ।

# अथ परस्मैपदिनः

**कृती छेदने** । कृन्तति। चकर्त्त । कर्त्तिता । 'सेऽसिची' ति वेट् । कर्त्तिष्यति। कर्त्स्यति। अकर्त्तीत् (१) । **खिद परिदेवने** । खिन्दति । चिखेद । खेत्ता । खेत्स्यति । **पिश अवयवे** । पिंशति । पिपेश । पेशिता। **ओव्रश्चू छेदने** । 'ग्रहीज्या' । वृश्चति । लिटयभ्यासस्येति सम्प्रसारणं–रेफस्य ऋकारः। 'उरत्'। तस्य 'अच परस्मिन्नि' ति स्थानिवद्भावान्न 'सम्प्र सारणे सम्प्रसारण' मिति वस्योत्वं न– । वव्रश्च । वव्रश्चिथ, वव्रष्ठ । व्रश्चिता । व्रष्टा । व्रश्चिष्यति। **व्रक्ष्यति**। वृश्चतु । वृश्च्यात् । अव्रश्चीत् । अव्राक्षीत्। **व्यच व्याजीकरणे** । विचति । विव्याच । विविचतुः । विविचुः । व्यचिता । व्यचिष्यति ।

विच्यात् । अव्याचीत्,(२) अव्यचीत् । 'व्यचेः कुटादित्वमनसी' ति तु नेह प्रवर्तते । 'अनसी' ति पर्युदासेन कृन्मात्र विषयत्वात् । **उछि 'उञ्छे** । 'ऊञ्छः कणशः आदानं कणिशा-द्यर्जनं शिलमिति' यादवः। उञ्छति । उञ्छाञ्चकार । उञ्छिता । ऋच्छ गतीन्द्रियप्रलयमूर्ति भावेषु । 'छेच' । ऋच्छति । ऋच्छत्यृतामिति गुणः । परत्वाण्णल्यपि भवति । द्विहल्ग्रहण-स्यानेकहलुपलक्षणत्वान्नुट् । आनर्च्छ (३) । आनर्च्छतुः । ऋच्छिता । **उज्झ उत्सर्गे** । उज्झति। उज्झाञ्चकार। **लुभ विमोहने** । लुभति । लुलोभ । 'तीषसहे'ति वेट् । लोभिता । लोब्धा । लोभिष्यति । **तृप तृम्फ तृप्तौ** । तृपति । ततर्प । तर्पिता । अतर्पीत् । तृम्फति । शस्य ङित्वादनिदि-तामिति नलोपः। (**शे तृम्फादीनां नुम्वाच्यः**।) आदिशब्दः प्रकारे। प्रकारो भेदसादृश्ये। तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ। तृफ्यात् । **मृड सुखने** । **पृड च** । मृडति । पृडति । ममर्ड । **शुन गतौ** । शुनति । शुशोन । **इष इच्छायाम्** । 'इषुगमी' ति छः । इयेष ।

---

(१) लुङि अटि तिपि तिप इकारलोपे च्लौ च्लेः सिचि 'आर्धधातुकस्येड्' इति इटि 'अस्तिसिचः' इति ईटि 'इट ईटि' इति सलोपे 'पुगन्त' इति गुणे 'वदव्रज' इति वृद्धौ प्राप्तायां 'नेटि' इति निषेधे लघूपधगुणे अकर्तीत् ।

(२) लुङि अटि तिपि च्लौ सिचि 'आर्धधातुकस्येड्' इति इटि तिप इलोपे 'अस्तिसिचोऽपृक्ते इति' ईटि 'इट ईटि' इति सलोपे 'अतो हलादेर्लघोः' इति विकल्पेन वृद्धौ 'अव्याचीत्' इति । वृद्धयभावे अव्यचीत् इति ।

(३) लिटि तिपि णलि द्वित्वेऽभ्यासत्वे ऋच्छ ऋच्छ अ इति जाते 'उरत्' इति अभ्यासऋकारस्य अदादेशे 'उरण् रपर' इति रपरत्वे च हलादिशेषे अ ऋच्छ् अ इति स्थिते 'अत आदेः' इति अभ्यासस्य आत्वे 'तस्मान्नुड् द्विहलः' इति नुटि ऋच्छत्यृताम् इति गुणे रपरे च आनर्च्छ इति ।

'तीषे'ति वेट् । एषिता । एष्टा । एषिष्यति । इष्यात् । ऐषीत् । ऐषिष्यत् **कुट कौटिल्ये ।** 'गाङ्कुटादी'ति ङित्त्वम् । चुकुटिथ । चुकोट । चुकुट । कुटिता । **पुट संश्लेषणे ।** पुटति । पुपोट । पुटिता । **स्फुट विकसने ।** स्फुटति । पुस्फोट । स्फुटिता । **स्फुर स्फुल सञ्चने ।** स्फुरति । स्फुलति ।

**स्फुरतिस्फुलत्योर्निर्निविभ्यः ८।३।७६**

निर्निविभ्यः परयोः स्फुरतिस्फुलत्योः सस्य षत्वं वा स्यात् । निःष्फुरति । निःस्फुरतीत्यादि । **णू स्तवने ।** 'परिणूतगुणोदयः' । नुवति । नुवतः । नुवन्ति । नुनाव (१) । नुविता ।

इति कुटादायः ।

**टुमस्जो शुद्धौ ।** मज्जति । ममज्ज । 'मस्जिनशो' रिति नुम् । **(मस्जेरन्त्यात्पूर्वो नुम्वाच्यः)** । संयोगादिलोपः । ममङ्क्थ । ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । 'चोः कु'रिति कुत्वेन जस्य गः । तस्य 'खरि चे' ति कः । 'अनुस्वारस्य ययी'त्यनुस्वारस्य ङः । अमाङ्क्षीत् (२) । अमाङ्क्ताम् । अमाङ्क्षुः ।

**रुजो भङ्गे ।** रुजति । रुरोज । रोक्ता । रोक्ष्यति । अरौक्षीत् । **भुजो कौटिल्ये ।** भुजति । बुभोज । इत्यादि रुजिवत् । **विश प्रवेशने ।** विशति । विवेश । वेष्टा । अविक्षत् । **मृश आमर्शने ।** आमर्शनं स्पर्शः । मृशति । ममर्श । म्रष्टा । मर्ष्टा । म्रक्ष्यति । मर्क्ष्यति । मृशतु । अमृशत् । मृशेत् । मृश्यात् । 'अनुदात्तस्य चर्दुपधे' त्यम् । 'पृशमृशे' ति च्लेः सिज्वा । अम्राक्षीत् । 'शल इगुपधे' ति क्सः । अमृक्षत् । **षद्लृ विशरणगत्यवसादनेषु ।** विशरणं दुःखम् । 'पाघ्राध्मेति सीदादेशः सीदति ।

**सदिरप्रतेः ८।३।३६**

निषीदति । न्यषीदत् ।

**सदेः परस्य लिटि ८।३।११८**

सदेरभ्यासात्परस्य सस्य षत्वं न स्याल्लिटि । निषसाद । ससाद । सेदतुः । सेदुः । सेदिथ । ससत्थ । सत्ता । सत्स्यति । लृदित्वादङ । असदत् । **शद्लृ शातने ।**

---

(१) णू धातोर्लिटि तिपि णलि द्वित्वेऽभ्यासकार्ये 'कृताकृतप्रसङ्गी विधिर्नित्यः' इति नियमात् 'अचो ञ्णिति' इति वृद्धौ तत 'एचोऽयवायावः' इति आवि नुनाव इति ।

(२) लुङि अटि तिपि च्लौ सिचि अपृक्ततकारस्य ईटि 'मस्जि नशोर्झलि' इति नुमि मस्जेरन्त्यात्पूर्वो नुम्वाच्यः' इति तस्य सकारात्परे जाते 'स्कोः' इति सलोपे 'वदव्रज' इति वृद्धौ जस्य गत्वे गस्य कत्वे अनुस्वारे परसवर्णे तत षत्वे च अमाङ्क्षीत् इति ।

**शदे शितः १।३।६०**

शिद्भाविनोऽस्मात्तङानौ स्तः । शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदत् । अशत्स्यत् । **कॄ विक्षेपे ।**

**ॠत इद्धातोः ७।१।१००**

ॠदन्तस्य धातोरङ्गस्य इत्स्यात् । किरति (१) ।

**(इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन)** । वृद्धिः । चकार । चकरतुः । चकरुः । 'वृतो वा' । करिता । करीता । 'हलि चे'ति दीर्घः । कीर्यात् । अकारीत् (२) ।

**कितौ लवने ६।१।११४**

उपात्किरतेः सुट् स्याच्छेदनेऽर्थे । उपस्किरति । **(अडभ्यास व्यवायेऽपि सुट्कात्पूर्व इति वक्तव्यम्)** । उपास्किरत् । उपचस्कार ।

**हिंसायां प्रतेश्च ६।१।१४१**

उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् । उपस्किरति । प्रतिस्किरति । **गॄ निगरणे ।**

**अचि विभाषा ८।२।२१**

गिरते रेफस्य लत्वं वा स्यादजादौ प्रत्यये परे । गिरति । गिलति । जगार । जगाल । जगरिथ । जगलिथ । गरिता । गरीता । गलिता । गली ता **प्रच्छ ज्ञीप्सायाम् ।** 'ग्रहिज्ये' ति संप्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् (३) ।

## इति परस्मैपदिनः ॥

---

(१) कॄ विक्षेपे धातोर्लटि तिपि शे 'ॠत इद्धातोः' इति ॠत इदादेशे 'उरण् रपरः' इति रपरे च 'किरति' इति रूपम् ।

(२) 'सिचि वृद्धिः परस्मै पदेषु' इति वृद्धिः ।

(३) प्रच्छधातोर्लुङि अटि तिपि च्लौ सिचि 'व्रश्च०' इति छस्य षत्वे 'षढो कः सि' इति षस्य कत्वे सस्य षत्वे तिप इलोपे "अस्तिसिचोऽपृक्ते" इति ईटि 'वदव्रज' इति वद्धौ अप्राक्षीत् इति ।

# अथाऽऽत्मनेपदिनः

**दृङ आदरे ।** आद्रियते । आदद्रे । आदद्रिषे । आदर्त्ता । आदरिष्यते । **धृङ अवस्थाने ।** ध्रियते । दध्रे । **मृङ प्राणत्यागे ।**

**म्रियतेर्लुङलिङोश्च १।३।६१**

लुङलिङो शितश्चः प्रकृतिभूतान्मृङस्तङानौ, नान्यत्र । ङित्त्वं स्वरार्थम् । 'रिङशयग्लिङक्षु' । इयङ। म्रियते । ममार। ममर्थ । मम्रिव । मम्रिम । मर्ता । मरिष्यति । मृषीष्ट। अमृत। अमरिष्यत् । **पृङ व्यायामे ।** प्रायेणायं 'व्याङ' पूर्वः । व्याप्रियते । व्यापप्रे (१) । व्यापप्राते। व्यापरिष्यते । 'ह्रस्वादङ्ग' दिति सिज्लोपः । व्यापृत । व्यापृषाताम् । **जुषी प्रीतिसेवनयोः ।** जुषते । जुजुषे । जोषिता । ओविजी भयसञ्चलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते ।

**विज इट् १।१।२**

विजेः पर इडादिप्रत्ययो ङिद्वत् स्यात् । उद्विजिता (२) । उद्विजिष्यते । **ओलजी ओलस्जी व्रीडायाम् ।** लजते । लेजे । लज्जते । ललज्जे ।

## ॥ इति तुदादिः ॥

अभ्यासः

**प्रश्न १. तुदति, इत्यस्य साधुत्वं विधेयम्**

उ०– तुद्, धातोः कर्तरि लटि लस्य तिपि सार्वधातुकत्वे प्राप्तं शपं प्रबाध्य 'तुदादिभ्यः शः' इति शेऽनुबन्धलोपे शित्वात्सार्वधातुकत्वे "सार्वधातुकमपित्" इति ङित्वे ङित्व प्रयुक्त गुणस्य क्ङितिचेति निषेधे तुदति, इति ।

**प्रश्न २. बभर्ज, इत्यस्य साधनप्रक्रियां दर्शयत**

उ०– भ्रस्ज् धातोः कर्तरि लिटि लस्य तिपि सार्वधातुकसंज्ञां प्रबाध्य "लिट् च" इति आर्धधातुकत्वे तिपो णलि भ्रस्ज्+अ इति स्थिते "भ्रस्जोरोपधयोरमन्यतरस्याम्" इति पाक्षिके रमागमे द्वित्वेऽभ्यासादिकार्ये बभर्ज, इति रूपम् । पक्षे श्चुत्वे जश्त्वे बभ्रज्ज, इति रूपद्वयम् ।

---

(१) लिटि तादेशे तस्य एशादेशे द्वित्वेऽभ्यासत्वे 'उरत्' इति अदादेशे रपरे हलादिशेषे यणि च व्यापप्रे इति ।

(२) लुटि तादेशे तासि इटि तिपो डात्वे तासो डित्वाट्टेर्लोपे 'विज इट्' इति इटो ङिद्वद्भावाद् गुणाभावे 'उद्विजिता' इति ।

**प्रश्न ३. वव्रश्च, इति रूपं निष्पादयत**

उ०– छेदनार्थकाद् व्रश्च् धातोः कर्तरि लिटि लस्य तिपि सार्वधातुकसंज्ञां प्रबाध्य "लिट् च" इत्यार्धधातुकत्वे तिपो णल्यनुबन्धलोपे व्रश्च् + अ इति स्थिते द्वित्वेऽभ्यासत्वे "लिट्यभ्यासस्योभयेषाम्" इति संप्रसारणे पूर्वरूपे "उरदिति अत्वे रपरत्वे हलादिशेषे वव्रश्च इति। अभ्यासे वर्तमानस्य वकारस्य संप्रसारणं तु नशङ्कनीयम्। ऋकारस्य थानिवद्भावेन प्राप्तस्य संप्रसारणस्य "न संप्रसारणे संप्रसारणम्" इति निषेधात्।

**प्रश्न ४. तृम्फति, इत्यस्य साधुत्वप्रकारो दर्शनीयः**

उ० तृम्फ धातोः कर्तरि लटि लस्य तिपि सार्वधातुकत्वे शपं प्रबाध्य "तुदादिभ्यः शः" इति शेऽनुबन्धलोपे शित्वात्सार्वधतुकत्वे "सार्वधातुकमपित्" इति ङित्वे "अनिदितामिति नकारलोपे "(शे तृम्फादीनां नुम्वाच्यः) इति पुनर्नुमि अनुस्वारे परसवर्णे तृम्फति, इति रूपम्।

**प्रश्न ५. चकार, इत्यस्य साधुत्वं वर्शयत**

उ०– विक्षेपार्थकात् कॄ धातोः कर्तरि लिटि लस्य तिपि तिपो णलि द्वित्वेऽभ्यासत्वे "उरत्' इति अत्वे रपरे च हलादिशेषे कुहोश्चुरिति चुत्वे चकॄ + अ इति जाते परत्वाद् गुणे प्राप्तेऽन्तरङ्गत्वाच्चेत्वे प्राप्ते (इत्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन) इति वार्तिकबलेन "ऋच्छत्यॄताम्" इति गुणे रपरे च उपधा वृद्धौ चकार, इति रूपम्।

## अभ्यासार्थं प्रश्नाः

(१) वभर्ज, भृज्यात्, मुक्षीष्ट, अलिपत्, वव्रश्च, ततृम्फ, निःस्फुरति, न्यषीदत्, शीयते, चकार, उपास्किरत्, म्रियते, व्यापृत, उद्विजिता एते प्रयोगाः प्रक्रियाप्रदर्शनपुरःसरं साधु साधनीयाः।

(२) कृष विलेखने अस्य धातोर्लुङि तिपि संपत्स्यमानानां रूपाणां सिद्धौ विशिष्टकार्यविधायकानि सूत्राणि विलिख्य प्रक्रियानुसारं तेषां कार्याणि च दर्शयत।

(३) असिचत् इत्यत्र लघूपधगुणाभावकारणं निगद्यताम्।

(४) वव्रश्चिथ इत्यत्र केन सूत्रेण विभाषयेड् विधीयते। इडभावे च वव्रष्ठ इति सिद्धौ केन कथं सकार लोपो विधीयते ?

(५) पप्रच्छतुः अस्य सिद्धौ संप्रसारणवारणविधिं दर्शयत।

(६) आनर्च्छ, अत्र कथं केन नुड् विधीयते ?

(७) वभर्ज, क्रष्टा, मुञ्चति, ततृम्फ, निषसाद, एषु प्रयोगेषु विशिष्टकार्यविधायकानां सूत्राणां प्रक्रियानुसारं कार्याणि ब्रूत।

(८) रूपाणि विलिखत

(क) भ्रस्ज पाके इत्यस्य लटि ।

(ख) विद्लृ लाभे इत्यस्य लिटि ।

(ग) षिच क्षरणे इत्यस्य लृटि ।

(घ) ओव्रश्चू छेदने इत्यस्य लोटि ।

(ङ) टुमस्जो शुद्धौ इत्यस्य लङि ।

(च) कॄ विक्षेपे इत्यस्य लुङि ।

(छ) जुषी प्रीतिसेवनयो:, इत्यस्य लिङि ।

(९) तुदादिगणस्थानां कृष–विद्लृ–खिद्–कुट–टुमस्जो–षद्लृ–कॄ–गॄ–दृ–भृ धातूना मर्थान् विलिखत ।

(१०) नुदति, बभर्ज, वेदिता, लेप्स्यन्ति, मृशन्तु, असव:, अकारीत्, अमरिष्यत, इष्यात् मुक्षीष्ट एतानि क्रियापदानि प्रयुज्य पृथक् पृथक् नव वाक्यानि विरचयत ।

(११) संशोध्यन्तामधस्तनवाक्यानि

(क) व्याधितोऽपि आधि र्नरमधिकं तोदति ।

(ख) प्रायशो युवानो युवभिरेव मिलन्ति ।

(ग) सीता रामेण सह वनं गन्तुमिएष ।

(घ) ये विद्यार्थिन इदानीं पठन्ति परीक्षायां ते कदापि न सिदन्ती ।

(ङ) जुखष्व हे मानव श्री पतिपदम् ।

# अथ रुधादिगणः

**रुधिर् आवरणे।**

**रुधादिभ्यः श्नम् ३।१।७८**

शपोऽपवादः। रुणद्धि। 'श्नसोरल्लोपः' रुन्द्धः(१)। रुन्धन्ति। रुणत्सि। रुन्द्धः। रुन्द्ध। रुणध्मि। रुन्ध्वः। रुन्ध्मः। रुन्धे। रुन्धाते। रुन्त्से। रुन्धाथे। रुन्द्ध्वे। रुन्धे। रुन्ध्वहे। रुन्ध्महे रुरोध। रुरुधे। रोद्धा। रोत्स्यति। रोत्स्यते। रुणद्धु। रुन्द्धात्। रुन्द्धाम्। रुन्धन्तु। रुन्धि(२)। रुणधानि(३)। रुणधाव। रुणधाम। रुन्द्धाम्। रुन्धाताम्। रुन्धताम्। रुन्त्स्व। रुणधै। रुणधावहै। रुणधामहै। अरुणत्–द्। अरुन्द्धाम्। अरुन्धन्। दश्चेति रुर्वा। अरुणः, अरुणत्–द्। अरुन्द्धम्। अरुन्द्ध। अरुन्द्ध। अरुन्धाताम्। अरुन्धत। रुन्ध्यात्। रुन्धीत। रुध्यात्। रुत्सीष्ट(४)।अरुधत्। अरौत्सीत्। अरुद्ध। अरोत्स्यत्। अरोत्स्यत। **भिदिर् विदारणे। छिदिर् द्वैधीकरणे। युजिर् योगे। रिचिर् विरेचने**। रिणक्ति। रिङ्क्ते। रिरेच। रेक्ता। अरिणक्। अरिचत्। अरैक्षीत्। अरिक्त। **विचिर् पृथग्भावे**। विनक्ति। विङ्क्ते। **क्षुदिर् संपेषणे**। क्षुणत्ति। क्षुन्ते। क्षोत्ता। अक्षुदत्, अक्षौत्सीत्। अक्षुत्त। **उच्छृदिर् दीप्ति-देवनयोः**। छृणत्ति। छृन्ते। चच्छर्द। सेऽसिचीतिवेट्। चच्छृदिषे, चच्छृत्से। छर्दिता। छर्दिष्यति। छर्त्स्यति। अच्छृदत्। अच्छर्दीत्। अच्छर्दिष्ट। **उदिर् हिंसानादरयोः**। तृणत्ति। तृन्ते। **कृती वेष्टने**। कृणत्ति। **तृह हिसि हिंसायाम्**।

**तृणह इम् ७।३।९२**

तृहः श्नमि कृते इम् हलादौ पिति। तृणेढि। तृण्ढः। ततर्ह। तर्हिता। अतृणेट्।

**श्नान्नलोपः ६।४।२३**

हिनस्ति। जिहिंस। हिंसिता। **उन्दी क्लेदने**। उनत्ति। उन्तः। उन्दन्ति। उन्दाञ्चकार। औनत्। औन्ताम्। औन्दन्। औनः। औनदम्। **अञ्जू-व्यक्ति-म्रक्षण-कान्ति-गतिषु**।

---

(१) णत्वस्याऽसिद्धत्वादनुस्वारे परसवर्णे च जाते तस्य परसवर्णस्य असिद्धत्वान्नस्य णत्वं न 'झरो झरि' इति विकल्पेन धलोपः, रुन्धः, पक्षे 'रुन्द्धः।

(२) झलन्तत्वाद् 'हुझल्भ्यो....' इति हेर्धिः।

(३) रुणधानि– 'आडुत्तमस्यपिच्चे,ति आडागमः।

(४) लिङ्सिचावात्म...... इति, कित्वान्नगुणः।

अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ, आनङ्क्थ । अञ्जिता । अङ्क्ता । अङ्ग्धि । अनजानि । आनक् ।

**अञ्जेः सिचि ७।३।७१**

अञ्जेः सिचो नित्यमिट् । आञ्जीत् (१) । **तञ्चू संकोचने ।** तनक्ति । तङ्क्ता । तञ्चिता । **ओविजी भयसंचलनयोः ।** विनक्ति । विङ्क्तः । विज इडिति ङित्वम् । विविजिथ । विजिता । अविनक् । अविजीत् । **शिष्लृ विशेषणे ।** शिनष्टि । शिंष्टः । शिंषन्ति । शिनक्षि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः (२) । शिण्ढि (३) । शिनषाणि । अशिनट् । शिंष्यात् । शिष्यात् । अशिषत् । अशेक्ष्यत् । एवं **पिष्लृ संचूर्णने । भञ्जो आमर्दने ।** श्नान्नलोपः । भनक्ति । बभञ्जिथ, बभङ्क्थ (४) । भङ्ग्धि । अभाङ्क्षीत् । **भुज पालनाऽभ्यवहारयोः ।** भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् ।

**भुजोऽनवने १।३।६६**

तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम्—महीं भुनक्ति । **ञिइन्धी दीप्तौ ।** इन्धे । इन्धाते । इन्धते । इन्त्से । इन्धाञ्चक्रे । इन्धिता । इन्धाम् । इन्धाताम् । इन्धताम् । इन्धताम् । इनधै । ऐन्ध । ऐन्धाताम् । ऐन्धत । ऐन्धाः । **विद विचारणे ।** विन्ते । वेत्ता ।

## ।। इति रुधादिगणः ।।

अभ्यासः

**प्रश्न १. "रुधादिभ्यः श्नम्" इति सूत्रेण विधीयमानो विकरणः, आगमः प्रत्ययो वा ?**

**उ० –** प्रकृतसूत्रेण विधीयमानो विकरणः शित्वसामर्थ्यात् प्रत्ययत्वं मित्वसामर्थ्याच्च आगमत्वं भजते ।

**प्रश्न २. रुन्धः 'इत्यत्र णत्ववारणप्रकारो दर्शनीयः**

**उ० –** अत्र णत्वानुस्वारयोः प्राप्तयोः सतोर्णत्वस्यासिद्धात्वादनुस्वारे परसवर्णे च, ततः परसवर्णस्यासिद्धत्वान्नणत्वम् ।

---

(१) वदव्रजेति वृद्धिर्न नेटीति निषेधात्, आटा सह तु आटश्चेति वृद्धिः । आञ्जीत् तेन माभवानञ्जीत्, इति ।

(२) 'हुझल्भ्यो हेर्धिः' ।

(३) शिनष्+धि, इति स्थितिः । 'श्नसोरल्लोपः' इति 'अ' लोपे । जश्त्वम्, ष्टुत्वम् झलो झलीति वा डलोपः, अनुस्वारपरसवर्णौ –शिण्ढि, शिण्ड्ढि ।

(४) क्रादिनियमात् थलि वेट् ।

**प्रश्न ३. जिहिंस, इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ० – इकारेत्संज्ञकाद् हिसि धातोः "इदितो नुम् धातोः" इति नुमि अनुबन्धलोपे कर्तरि लिटि लस्य तिपि तिपो णलि द्वित्वेऽभ्यासादिकार्ये नस्यानुस्वारे कुहोश्चुरिति ह्रस्य झकारे 'अभ्यासे चर्च' इति जश्त्वे जिहिंस, इति रूपम्।

**प्रश्न ४. औनत्, इत्यस्य साधुत्वं निपुणं दर्शयतः**

उ० – उन्द् धातोर्लङि तिपि शपि प्राप्ते तम्बाधित्वा श्नमि कृतेऽनुबन्धलोपे मित्वादन्त्यादचः परे 'उननद् ति' इति जाते "श्नान्नलोपः" इत्यनेन नलोपे च कृतेऽटि प्राप्ते तम्बाधित्वा अजादित्वात् "आडजादीनाम्" इत्यनेनाटि "आटश्च" इत्यनेन वृद्धौ "खरि च" इति दस्य चर्त्वे "इतश्च" इति तिप इलोपे "झरोझरि सवर्णे" इति पूर्व तकारस्य लोपे च कृते औनत्, इति रूपम्।

**प्रश्न ५. शिण्ढि, इत्यस्य साधुत्वं वर्णयत**

उ० – शिष् धातोर्लोटि लः स्थाने मध्यमपुरुषैकवचने सिपि शपि प्राप्ते तम्बाधित्वा श्नमि कृतेऽनुबन्धलोपे मित्वादन्त्यादचः परे सेहर्यपिच्च इति सेहर्यादिशे 'श्नसोरल्लोपः' इत्यल्लोपे हुझल्भ्यो-हेर्धिः इति हेर्धिभावे "झलां जश झशि" षस्य डत्वे 'ष्टुना ष्टुः इति धेर्धस्य ष्टुत्वे "झरोझरि सवर्णे" इति डलोपे नस्यानुस्वारे परसवर्णे च कृते शिण्ढि, लोपाभावे शिण्ड्ढि, इति रूपद्वयम्।

अभ्यासार्थं प्रश्नाः

(१) **रुन्धः, अरुणः तृणेढि, हिनस्ति, ओदनं भुङ्क्ते एतेषां निष्पत्तिप्रक्रियां साधु दर्शयत।**

(२) **रूपाणि विलिखत**

(क) रुधिर् आवरणे इत्यस्य लोटि उभयपदे।

(ख) भिदिर् विदारणे इत्यस्य लटि उभयपदे।

(ग) रिचिर् विरेचने इत्यस्य लिटि उभयपदे।

(घ) तृह हिसि हिंसायाम् इत्यस्य लटि।

(ङ) ञिइन्धी दीप्तौ इत्यस्य लङि।

(३) **आवरण–योग–वेष्टन–भयसंचलन–संचूर्णन–दैन्यार्थकानां रुधादिगणस्थानां धातूनां नामानि विलिख्य तेषां लङि समग्राणि रूपाणि विलिखत।**

(४) **केवलमुत्तरयत**

(क) रुणद्धि इत्यत्र तिपस्तकारस्य धकारविधायि सूत्रं किम्?

(ख) अरुणत् इत्यस्य साधनप्रक्रियायां अरुणध् त् इति स्थितौ केन सूत्रेण तकारलोपो विधीयते?

(ग) शिण्ढि अस्य साधने श्नम् प्रत्ययस्य अकारलोपि सूत्रं किम् ?

(घ) चच्छर्द इत्यस्य साधने अभ्यासऋकारस्य अदादेशविधायकं सूत्रं किम् ?

(ङ) ओदनं भुङ्क्ते इत्यत्र भुजधातोरात्मनेपदं, परन्तु महीं भुनक्ति इत्यत्र तु भुजधातोः परस्मैपदं विहितम् अत्र कारणं स्पष्टीकुरुत ।

(५) **अधस्तनवाक्यानि शोधनीयानि**

(क) रथकारौ काष्ठं भिदतः ।

(ख) ईश्वरो भक्तान् पापाद् विनक्ते ।

(ग) विवाहे भगिन्य भ्रातरं अञ्जन्ते ।

(घ) इदानीं वध्वः गृहे मर्कटान्नानि न पिंसन्ति ।

(ङ) पृथ्वीनारायणः सम्यक् महीं बुभुजे ।

(६) **अरुन्धमहि, जिहिंस, अञ्जन्ति, वभञ्जिथ, इन्द्ध एतानि क्रियापदानि प्रयुज्य पृथक् पञ्च वाक्यानि विरचयत ।**

# अथ तनादिगणः

**तनु विस्तारे।**

**तनादिकृञ्भ्य (१)उः ३।१।७९**

तनोति, तनुते । ततान । तेने । तनिता । तनिष्यति । तनिष्यते । तनोतु । तनुताम् । अतनोत् । अतनुत । तनुयात् । तन्वीत । तन्यात् । तनिषीष्ट । अतनीत्, अतानीत् ।

**तनादिभ्यस्तथासोः २।४।७९**

तनादेः सिचो वा लुक् तथासोः । अनुदात्तोपदेशेति नलोपः । अतत, अतनिष्ट । अतथाः । अतनिष्ठाः । अतनिष्यत्, अतनिष्यत । **षणु दाने**। सनोति, सनुते–ये विभाषेति आत्वम् । सायात्, सन्यात् ।

**जन–सन खनां सञ्झलोः ६।४।४२**

एषामाकारो झलादौ सनि झलादौ क्ङिति च। असात, असनिष्ट। असाथाः, असनिष्ठाः । **क्षणु हिंसायाम्** । क्षणोति, क्षणुते। ह्म्यन्तेति न वृद्धिः (२)। अक्षणीत् । अक्षत, अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः । **छिणु च** । उप्रत्यये लघूपधगुणो वा (३) । क्षिणोति । अक्षेणीत् । अक्षित, अक्षेणिष्टः। **तृणु अदने** । तृणोति, तर्णोति । तृणुते, तर्णुते । **डुकृञ् करणे** । करोति। 'अत उत्सार्वधातुके' कुरुतः । हलि चेति दीर्घे प्राप्ते ।

**न भकुर्छुराम् ८।२।७९**

भस्य कुर्छुरोपधाया नदीर्घः । कुर्वन्ति ।

**नित्यं करोतेः ६।४।१०८**

करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः परयोः । कुर्वः । कुर्मः । कुरुते । चकार । चकर्थ । चकृव। चक्रे। कर्ता। करिष्यति (४) । करिष्यते। करोतु, कुरुताम् । अकरोत् अकुरुत ॥

---

(१) तनादित्वादेव सिद्धे कृञ् ग्रहणं गणकार्यस्यानित्यत्वे लिङ्गम्, तेन ''न विश्वसे दविश्वस्ते'' इत्यादि सिद्धम् । (श्वसेदित्यत्रादादिगणकार्यं शपो लुग्न भवति इत्यर्थः )।

(२) वदव्रजेति प्राप्ता वृद्धिर्नेटीत्यनेन निषिध्यते। पुनश्च 'अतोहलादेर्लघोः' इति विकल्पेन प्राप्ताया वृद्धेर्ह्म्यन्तेति निषेध इत्यर्थः ।

(३) उपधासंज्ञानिमित्तकत्वात्संज्ञा पूर्वकोऽयं विधिः। संज्ञापूर्वको विधिर नित्य' इति न गुण इत्यात्रेयः। संज्ञापूर्वकविधेरनित्यत्वस्य भाष्यानुक्तत्वाद् भवत्येव गुण इत्यन्ये। तथा चोक्तं 'गुणो वा' इति ।

(४) 'ऋद्धनोः स्ये' इति इट् ।

**ये च ६।४।१०९**

कृञ उलोपो यादौ प्रत्यये। कुर्यात्, कुर्वीत, क्रियात (१), कृषीष्ट(२)। अकार्षीत्, अकृत। अकरिष्यत्, अकरिष्यत।

**संपरिभ्यां करोतौ भूषणे ६।१।१३७**

**समवायें च ६।१।१३८**

आभ्यां परस्य करोतेः सुट् भूषणे संघाते चार्थे। संस्करोति=अलङ्करोतीत्यर्थः।

संस्कुर्वन्ति = संघीभवन्तीत्यर्थः। संपूर्वस्य क्वचिदभूषणेऽपिसुट् 'संस्कृतं भक्षाः' इति ज्ञापकात् (३)।

**उपात्प्रतियत्न–वैकृत्य–वाक्याध्यहारेषु च ६।१।१३९**

कृञः सुट्। चात्प्रागुक्तयोरर्थयोः। प्रतियत्नो=गुणाधानम्। विकृतमेव वैकृतं=विकारः। वाक्याध्याहरः=आकाङ्क्षितैकदेशपूरणम्। उपस्कृताकन्या (४)। उपस्कृता ब्राह्मणाः। एधोदकस्योपस्कुरुते। उपस्कृतं भुङक्ते। उपस्कृतं ब्रूते॥ **वनु याचने**। वनुते। ववने (५)। **मनु अवबोधने**। मनुते। मेने। मनिता। अमनुत। मन्वीत। मनिषीष्ट।

## ॥ इति तनादिगणः ॥

अभ्यासः

**प्रश्नः १. तनादित्वादेव उप्रत्यये सिद्धे पुनः कृञ्ग्रहणं किं निर्दिशति?**

उ०– तनादित्वादेव उप्रत्यये सिद्धे कृञ्ग्रहणं व्यर्थं सज्ज्ञापयति यद् गणकार्यस्यानित्यत्वमिति। यथा– 'न विश्वसेदविश्वस्ते' इत्यादौ।

**प्रश्नः २. तनुते, इत्यस्य सिद्धिः साधु विधेया**

उ०– उकारानुबन्धकात् तन् धातोः कर्तरि लटि लस्यात्मनेपदसंज्ञके तप्रत्ययादेशे सार्वधातुकत्वे शपि प्राप्ते तम्बाधित्वा "तनादिकृञ्भ्य उः" इति उ विकरणे तन् उ त इति जाते त इत्यस्य 'सार्वधातुकमपित्' इति ङित्वे गुणाभावे टेरेत्वे तनुते, इति रूपम्।

---

(१) 'रिङ शयग्लिङक्षु' इति रिङ।

(२) 'उश्चेति' कित्वान्न गुणः।

(३) तेन–'अन्नं संस्करोति' इत्यादि सिद्धम्।

(४) अलङ्कृता इत्यर्थः।

(५) 'नशसददवादिगुणानाम्' इति निषेधात्––एत्वाभ्यासलोपौ न।

**प्रश्न ३. क्षिणोति, इत्यस्य साधुत्वं साधु कार्यम्**

उ०– उकारेत्संज्ञक क्षिण् धातोः कर्तरि लटि लस्य तिपि सार्वधातुकत्वे प्राप्तं शपं बाधित्वा उप्रत्यये संज्ञापूर्वको विधिरनित्यः इति पक्षे गुणाभावे क्षिणोति, इति संज्ञापूर्वको विधि- रनित्यः इति पक्षाभावे उप्रत्यये परे लघूपधगुणे कृते क्षेणोति, इति ।

**प्रश्न ४. कुर्वीत, इत्यस्य साधनरीतिर्लेखनीया**

उ०– कृ धातोर्विधिलिङि लस्यात्मनेपदसंज्ञके तादेशे शपं बाधित्वा उकारे विकरणे गुणे रपरे च कृते कर् उ त इति जाते "अत उत्सार्वधातुके" इति ककाराकारस्य उत्वे च "तें लिङः सीयुट् इति सीयुटागमेऽनुबन्धलोपे "लोपोव्योर्वलि" इति यलोपे "लिङः सलोपोऽनन्त्यस्य" इति सलोपे यणि च कृते कुर्वीत, इति रूपम् ।

**प्रश्न ५. अमनिष्ट, इति प्रयोगं साधु साधयत**

उ०– मन् धातोर्लुङि अटि लुङो लः स्थाने तादेशे सार्वधातुकत्वे शपं प्रबाध्य च्लौ तस्य सिचि आर्धधातुकत्वे इटि षत्वे ष्टुत्वे अमनिष्ट सिचोलुक् पक्षेतु अनुदात्तोपदेश इति नकार लोपे अमत इति रूपम् ।

## अभ्यासार्थं प्रश्नाः

(१) तनोति, असात, कुर्वन्ति, संस्करोति, उपस्कृतं ब्रूते, प्रयोगाः साधु साधनीयाः ।

(२) संक्षेपेणोत्तरयत

(क) अतत इत्यत्र सिचो लुक् केन विधीयते ?

(ख) अक्षणीत् इत्यत्र केन प्राप्ता वृद्धिः केन निषिद्धा ?

(ग) कुर्वः इत्यत्र केन प्राप्तम् वैकल्पिकम् उकारलोपं प्रबाध्य केन नित्यमुकारलोपः कृतः ?

(घ) एधोदकस्योपस्कुरुते अत्र केन सुड् विहितः ?

(३) रूपाणि विलिखत

(क) षणु दाने इत्यस्य आशिर्लिङि उभयपदे ।

(ख) डुकृञ् करणे इत्यस्य लिटि उभयपदे ।

(ग) तनु विस्तारे इत्यस्य लोटि उभयपदे ।

(घ) क्षणु हिंसायाम् इत्यस्य लृटि उभयपदे ।

(ङ) गुणाधानार्थकात् उपपूर्वकात् कृ धातोर्लटि आत्मनेपदे ।

(४) अतनुत, तृणोति, कुर्मः, संस्करोति, मेनिरे, एतानि क्रियापदानि प्रयुज्य पृथक् पञ्च वाक्यानि विरचयत।

(५) अधस्तनवाक्यानि शोधयत

(क) बुद्धिमान् मनुष्यः स्वयं शास्त्राणि तनुति ।

(ख) आवां सत्कार्यं कुरुवः ।

(ग) विवाहे नार्यः कुमारीं संकुर्वन्ति ।

(घ) दुष्टो जनः सज्जनमपि दुष्टं मनुन्ते ।

(ङ) कैकेयी दशरथं रामस्य चतुर्दशवर्षाणि विवासनं ववान ।

(६) तनादिगणस्थानां विस्तार–दान–हिंसाऽदन–करणाऽवबोधन–याचनार्थकानां धातूनां लोटि मध्यमपुरुषे संपत्स्यमानानि रूपाणि विलिखत ।

# अथ क्र्यादिगणः

**डु क्रीञ् द्रव्यविनिमये ॥**

**क्र्यादिभ्यः श्ना ३।१।८१**

शपोऽपवादः। क्रीणाति। 'ई हल्यघोः' क्रीणीतः। 'श्नाभ्यस्तयोरातः'। क्रीणन्ति। क्रीणासि। क्रीणीथः। क्रीणीथ। क्रीणामि। क्रीणीवः। क्रीणीमः। क्रीणीते। क्रीणाते। क्रीणते। क्रीणीषे। क्रीणाथे। क्रीणीध्वे। क्रीणे। क्रीणीवहे। क्रीणीमहे। चिक्राय। चिक्रियतुः। चिक्रियुः। चिक्रयिथ, चिक्रेथ। चिक्रिये। क्रेता। क्रेष्यति, क्रेष्यते। क्रीणातु। क्रीणीतात्। क्रीणीताम्। क्रीणाताम्। क्रीणताम्। अक्रीणात्। अक्रीणीत। क्रीणीयात्। क्रीणीत, क्रीयात्। क्रेषीष्ट। अक्रैषीत्। अक्रेष्ट। अक्रेष्यत्। अक्रेष्यत। **प्रीञ् तर्पणे कान्तौ च**। प्रीणाति। प्रीणीते। **श्रीञ् पाके**। श्रीणाति। श्रीणीते। **मीञ् हिंसायाम्**। प्रमीणाति। 'हिनुमीना' इति णत्वम्। प्रमीणीते। मीनातीत्यात्वम् (१)। ममौ। मिम्यतुः। ममिथ (२), ममाथ। मिम्ये। माता। मास्यति। मीयात्। मासीष्ट। अमासीत् (३)। अमासीष्टाम्। अमास्त। **षिञ् बन्धने**। सिनाति। सिनीते। सिषाय। सिष्ये। सेता। **स्कुञ् आप्रवणे ॥**

**स्तन्भु–स्तुन्भु–स्कन्भु–स्कुन्भु–स्कुञ्भ्यः श्नुश्च ३।१।८२**

चात् श्ना। स्कुनोति, स्कुनुते। स्कुनाति, स्कुनीते। चुस्काव (४), चुस्कुवे। स्कोता। अस्कौषीत्। अस्कोष्ट। स्तन्भ्वादयश्चत्वारः सौत्राः। सर्वे रोधनार्थाः। परस्मैपदिनः।

**हलः श्नः शानज्झौ (५) ३।१।८३**

स्तभान ॥

**जॄ–स्तम्भु–म्रुचु–म्लुचु–ग्रुचु–ग्लुचु–ग्लुञ्चु–श्विभ्यश्च ३।१।५८**

च्लेरङ् वा। व्यष्टभत् (६)। अस्तम्भीत्। **युञ् बन्धने**। युनाति, युनीते। योता।

---

(१) मीनाति मिनोतिदीङां......'इत्यस्मिन्सूत्रे, 'अशिति–एज् निमित्ते' इत्युक्तत्वात् तिप्–सिप्–मिप्–सु (गुणवृद्धियोग्येषु) अस्य प्रवृत्तिर्नान्यत्र।

(२) 'आतोलोप इटि च' आकारलोपः। अजन्तत्वात्थलि वेट्, पक्षे ममाथ।

(३) आत्वे कृते 'यमरमनमातां सक्च' इति सक्, सिच इट् च।

(४) 'शर्पूर्वाः खयः'।

(५) हलः परस्य श्नः शानजादेशः स्याद् हौ परे।

(६) व्यष्टभत्–प्राक्सितादड्व्यवायेऽपि' इति षत्वम्।

**क्नूञ् शब्दे ।** क्नूनाति । क्नूनीते । क्नविता । **दॄञ् हिंसायाम् ।** दृणाति । दृणीते । **द्रूञ् हिंसायाम् ।** द्रूणाति, द्रूणीते । **पूञ् पवने ।**

**प्वादीनां ह्रस्वः ७।३।८०**

पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ नॄ धॄ कॄ ऋॄ गॄ ज्या री ली व्ली प्ली एषां चतुर्विंशतेर्ह्रस्वः शिति । पुनाति,पुनीते । पविता ।। **लूञ् छेदने ।** लुनाति, लुनीते । **स्तॄञ् आच्छादने ।** स्तृणाति, स्तृणीते । तस्तार । तस्तरतुः (१)। तस्तरे । स्तरिता, स्तरीता । स्तृणीयात् । स्तृणीत । ऋत इद्धातोः । स्तीर्यात् । स्तरिषीष्ट । लिङसिचोरिति वेट् । स्तीर्षीष्ट (२) । 'सिचि च परस्मैपदेषु' । अस्तारीत् । अस्तारिष्टाम् । अस्तारिषुः । अस्तरिष्ट, अस्तीर्ष्ट । **कॄञ् हिंसायाम् ।** कृणाति, कृणीते । चकार । चकरे । **वॄञ् वरणे ।** वृणाति । वृणीते । ववार । ववरे । वरिता, वरीता । उदोष्ठ्येत्युत्वम् । वूर्यात् । वरिषीष्ट, वूर्षीष्ट (३) । अवारीत् । अवारिष्टाम् । अवरिष्ट, अवरीष्ट, अवूर्ष्ट । **धूञ् कम्पने ।** धुनाति । धुनीते । दुधविथ । दुधोथ । दुधुविव । धोता, धविता । 'स्तुसुधूञ्भ्यः परस्मैपदेषु' । अधावीत् । अधविष्ट । **ग्रह उपादाने ।** गृह्णाति (४) । गृह्णीते । जग्राह । जगृहे ।

**ग्रहोऽलिटि दीर्घः ७।२।३७**

एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि । ग्रहीता । गृह्णातु । गृहाण । गृह्यात् । ग्रहीषीष्ट । ह्म्यन्तेति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीषाताम् ।। **कुष निष्कर्षे ।** कुष्णाति । कोषिता ।

**निरः कुषः ७।२।४६**

वलादेरार्धधातुकस्येड् वा । निष्कोषिता, निष्कोष्टा । निरकोषीत् । शल इगुपधादिति क्सः । निरकुक्षत् । **अश भोजने ।** अश्नाति । आश । अशिता । अश्नातु । अशान ।। **ज्ञा अवबोधने ।** ज्ञाजनोर्जेति जादेशः । जानाति । जज्ञौ ।। **पॄ पालन पूरणयोः ।** पृणाति ।

---

(१) 'अत्र गुणः' 'ऋच्छत्यॄताम्' इत्यनेन ।

(२) उश्चेति कित्वम् 'ॠत इद्धातोरिति' इर्, हलिचेति दीर्घः ।

(३) वूर्षीष्ट, इडभावपक्षे उश्चेति कित्वम्, उदोष्ठ्य 'इति' उर् हलिचेति दीर्घः ।

(४) ग्रहिज्येति संप्रसारणम् ।

**शॄ हिंसायाम्** । शृणाति । शृदॄप्रां ह्रस्वोवेति पक्षे यण् । शश्रतुः, शशरतुः । **दॄ विदारणे** । दृणाति । दद्रतुः, ददरतुः । **जॄ वयोहानौ** । जृणाति ॥ **मुष स्तेये** । मुष्णाति । मोषिता । **पुष पुष्टौ** । पुष्णाति । पोषिता ॥ **बन्ध बन्धने** । बध्नाति (१) । बबन्ध । बबन्धिथ । बन्धा । भन्त्स्यति (२) । अभान्त्सीत् । अबान्धाम् (३) । अभान्त्सुः ॥ **क्लिशू विबाधने** । क्लिश्नाति (४) । क्लेशिता, क्लेष्टा । अक्लेशीत्, अक्लिक्षत् ॥ **वृङ संभक्तौ** । वृणीते । वव्रे । ववृढ्वे । वरिता, वरीता । अवरिष्ट, अवरीष्ट । अवृत ॥

## ॥ इति क्र्यादयः ॥

अभ्यासः

**प्रश्न १. क्रीणते, इत्यस्य साधुत्वं दर्शयत**

**उ०–** क्री धातोः कर्तरि **लटि** लस्य तिबादिषु आत्मनेपदसंज्ञके प्रथमपुरुषबहुवचने झादेशे सार्वधातुकत्वे शपं प्रबाध्य "क्र्यादिभ्यः श्ना" इति श्नाप्रत्ययेऽनुबन्धलोपे ना इत्यस्यापि शित्वप्रयुक्ते सार्वधातुकत्वे "सार्वधातुकमपित्" इति द्वयोरपि प्रत्यययोर्ङित्वे प्राप्तस्य गुणस्य क्ङितिचेति निषेधे "श्नाभ्यस्तयोरातः" इत्याकारलोपे झस्य "आत्मनेपदेष्वनतः" इति अतादेशे टेरेत्वे च क्रीणते, इति रूपम् ।

**प्रश्न २. ममौ, इत्यस्य सिद्धिपथं दर्शयत**

**उ०–** ञ्कारानुबन्धकाद् मीञ् धातोः कर्तरि लिटि लस्य तिपि सार्वधातुकसंज्ञां प्रबाध्य लिट्चेत्यार्धधातुकत्वे तिपोणल्यनुबन्धलोपे "मीनातीत्यात्वे द्वित्वेऽभ्यासादिकार्ये "आत औ णल" इति औकारादेशे वृद्धौ ममौ, आत्मनेपदे तु मिम्ये, इति रूपद्वयम् ।

**प्रश्न ३. स्तीर्यात्, इति निपुणं साधयत**

**उ०–** ञ्कारानुबन्धकात् स्तॄञ् धातोः कर्तरि आशिषिलिङि लस्य तिपि सार्वधातुकसंज्ञां प्रबाध्य लिङाशिषीति आर्धधातुकत्वे यासुटि कित्वे च तेरिकारलोपे स्कोरिति सकारलोपे प्राप्तस्य गुण क्ङितिचेति निषेधे "ॠत इद्धातोः' इति इत्वे रपरे च हलिचेति दीर्घे स्तीर्यात् इति रूपम् ।

---

(१) अनिदितामिति नलोपः ।

(२) 'एकाचो बशोभष्......' इति बस्य भत्वम् ।

(३) 'झलो झलि' इति सिचोलोपः । झषस्तथोरिति तकारस्य धत्वम् ।

(४) 'शात्' इति श्चुत्व निषेधः ।

**प्रश्न ४. वूर्षीष्ट, इत्यस्य साधुत्वं निर्दिशत**

उ०– वरणार्थकाद्ञ्कारानुबन्धकाद् वृञ् धातोः कर्तरि लिङि लस्यात्मनेपदसंज्ञके तादेशे सार्वधातुसंज्ञां प्रबाध्य लिङाशिषि" इत्यार्धधातुकत्वे "लिङः सीयुट्, इति सीयुटि आर्धधातुकत्वे "लिङसिचोरात्मनेपदेषु" इति पाक्षिके इटि वृ इ सीय् त इति स्थिते लोपोव्योर्वलीति यलोपे सुट्तिथोरिति सुटि गुणे षत्वे ष्टुत्वे च "वृतो वा" इति प्राप्तस्य दीर्घस्य न लिङि इति निषेधे वरिषीष्ट, इडभावे उश्चेति कित्वे प्राप्तस्य गुणस्य निषेधे उदोष्ठ्यपूर्वस्येति उत्वे रपरे च हलिचेति दीर्घे वूर्षीष्ट, इति रूपम् ।

**प्रश्न ५. गृहाण, इति प्रयोगः कथं सिध्यतीति लिखत**

उ०– उपादानार्थकाद् ग्रह् धातोः कर्तरि लोटि लस्य सिपि सार्वधातुकत्वे शपं प्रबाध्य श्ना प्रत्ययेऽनुबन्धलोपे शित्वात्सार्वधातुकत्वे ङित्वे च सेर्ह्यादेशे "हलः श्नः शानज्झौ" इति श्नः शानजादेशेऽनुबन्धलोपे शित्वात्सार्वधातुकतया सार्वधातुकमपिदिति ङित्वे "ग्रहिज्येति संप्रसारणे पूर्वरूपे णत्वेऽतोहेरिति हेर्लुकि गृहाण, इति रूपम् ।

**प्रश्न ६. जज्ञौ, इति प्रयोगं साधु साधयत**

उ०– ज्ञा धातोः कर्तरि लिटि लस्य तिपि णलि द्वित्वेऽभ्यासादिकार्ये "आत औ णलः" इति औत्वे वृद्धौ जज्ञौ इति रूपम् ।

**प्रश्न ७. शश्रतुः, इति निपुणं साधयत**

उ०– शॄ धातोः कर्तरि लिटि लस्य तसि तसोऽतुसि आर्धधातुकत्वेऽसंयोगादिति कित्वे कित्वात्मकगुणस्य निषेधे द्वित्वेऽभ्यासत्वे "शॄदॄप्रां ह्रस्वो वा" इति पाक्षिके ह्रस्वे, यणि रुत्वे विसर्गे च शश्रतुः, पक्षे ऋच्छत्यृतामिति गुणे– शशरतुः ।

## अभ्यासार्थं प्रश्नाः

(१) **क्रीणन्ति, चिक्रिये, स्कुनोति, स्तभान, व्यष्टभत्, ग्रहीता, निष्कोषिता, एतेषां प्रयोगाणां निष्पादनप्रक्रियां समीचीनतया प्रतिपादयत ।**

(२) **संक्षेपेणोत्तरयत–**

(क) प्रमीणाति इत्यत्र णत्वविधायकं सूत्रं किम् ?
(ख) व्यष्टभत् इत्यत्र च्लेरङविधायि सूत्रं किम् ?
(ग) अग्रहीत् इत्यत्र वृद्धिनिषेधप्रक्रियां ब्रूत ।
(घ) निष्कोषिता इत्यस्य सिद्धौ 'निः' इत्यस्य विसर्गस्य षत्वविधायि सूत्रं किम् ?
(ङ) अधवीष्ट इत्यत्र केन सूत्रेण विभाषयेड् विधीयते ?

(३) रूपाणि विलिखत

(क) डुक्रीञ् द्रव्यविनिमये इत्यस्य धातोर्लोटि उभयपदे।

(ख) स्कुञ् आप्रवणे इत्यस्य धातोर्लटि।

(ग) पूञ् पवने इति धातोर्लङि उभयपदे।

(घ) वृञ् वरणे इति धातोराशिर्लिङि।

(ङ) ज्ञा अवबोधने इति धातोर्लिटि।

(४) संशोध्यन्ताम् अधस्तनवाक्यानि–

(क) विद्यार्थिन आपणे अभ्यासपुस्तिकां क्रीणान्ति।

(ख) तभान भो ब्राह्मण ! क्षीरपात्रम्।

(ग) आत्मानं रक्षितुं लोके के न ज्ञानन्ति जन्तवः।

(घ) प्रथमश्छात्रः प्रधानाध्यापकात् पुरस्कारमग्रहीषुः।

(ङ) क्लेशेनापि सुपुस्नाति माता स्वीयं सुतं सदा।

(५) प्रीणाति, ममौ, तस्तरतुः, चक्रुः, गृहाण, अश्नाति, पोषिता एतानि क्रियापदानि प्रयुज्य पृथक् सप्त वाक्यानि विरचयत।

(६) क्र्यादिगणस्थानां तर्पण–पाक–बन्धन–पवन–वरण–भोजन–स्तेयार्थकानां धातूनां नामानि विलिखत।

# अथ चुरादिगणः

**चुर स्तेये ।**

**सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो-णिच् ३।१।२५**

चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थ इति । पुगन्तेति गुणः । सनाद्यन्ता इति धातुत्वम् । तिप्शबादि । गुणायादेशौ । चोरयति ।

**णिचश्च १।३।७४**

णिजन्तादात्मनेपदं कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात् (१)। चोरयिषीष्ट । णिश्रीति चङ । णौचिङीति ह्रस्वः । चङीति द्वित्वम् । हलादिः शेषः । दीर्घोलघोरित्यभ्यासस्य दीर्घः । अचूचुरत् । **चिति स्मृत्याम्** । चिन्तयति । अचिचिन्तत् । चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे (२) लिङ्गम् । तेन चिन्त्यादित्यादौ नलोपो न चिन्तति । चिन्तेदित्यादि । **यत्रि संकोचे** । यन्त्रयति । यन्त्रेति पठितुं शक्यम् । यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम् । एवं **कुद्रि अनृत भाषणे** । **तत्रि कुटुम्ब धारणे** । **मत्रि गुप्तपरिभाषणे** । तन्त्रयते । मन्त्रयते । एतौ आत्मनेपदिनौ । **स्फुडि परिहासे** । स्फुण्डयति । **पीड अवगाहे** ।

**भ्राज-भास-भाष-दीप-जीव-मील-पीडामन्यतरस्याम् ७।४।३**

एषामुपधाया ह्रस्वो वा चङ्परे णौ । अपीपिडत्, अपिपीडत् । **प्रथ प्रख्याने** । प्रथयति ।

**अत्स्मृ-दृ-त्वर-प्रथ-म्रद स्तृ-स्पशाम् ७।४।९५**

एषामभ्यासस्याकारश्चङ्परे णौ । इत्वापवादः (३)। अपप्रथत् । **पृथ प्रक्षेपे** । पर्थयति ।

---

(१) 'णेरनिटि' इति णिलोपः ।

(२) चिन्तयति, चिन्तयाञ्चकार, इत्यादौ णिचः क्ङित्वाभावादेव नलोपस्याऽप्रसक्त्या व्यर्थमिदित्करणमितिचेत्तत्राह– णिचः पाक्षिकत्वे लिङ्गम्, इति । तेन णिजभावे–आशीर्लिङि 'चिन्त्यादित्यत्र नलोपो न ।

(३) 'सन्यतः' इति प्राप्तस्येत्वस्यापवादः ।

### उर्ऋत् ७।४।७

उपधाया ऋवर्णस्य ऋद्वा चङ्परे णौ । इररामपवादः । (१) । अपीपृथत्, अपपर्थत् । **लुण्ठ स्तेये** । लुण्ठति । अलुलुण्ठत् । **तड अघाते** । ताडयति । अतीतडत् । **मडि भूषायां हर्षे च** । मण्डयति । अममण्डत् । **भडि कल्याणे**। भण्डयति । अबभण्डत् । **छर्द वमने** । छर्दयति । अचच्छर्दत् । **चुद संचोदने** । चोदयति । अचूचुदत् । **पाल रक्षणे** । पालयति । अपीपलत् । **पूज पूजायाम्** । पूजयति । अपूपुजत् । **कृत संशब्दने** ।

### उपधायाश्च ७।१।१०१

धातोर्ऋत इत् । रपरत्वम् । उपधायां चेति दीर्घः । कीर्तयति । अचीकृतत्, अचिकीर्तत् । **म्लेच्छ अव्यक्तायां वाचि** । म्लेच्छयति । अमिम्लेच्छत् । **ईड स्तुतौ** । ईडयति । **पिडि संघाते** । पिण्डयति । **रुष रोषे** । रोषयति । अरूरुषत् । **तुल उन्माने**। तोलयति । अतूतुलत् । **शुल्व माने** । शुल्वयति । अशुशुल्वत् । **घुषिर् विशब्दने** । घोषयति । अजूघुषत् । **पट पुट लुट तुजि मिजि षिजि लुजि भजि लघि त्रसि पिसि कुसि दसि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भाषार्थाः** । पाटयति । पोटयति । लोटयति । तुञ्जयति । एवं परेषाम् । घाटयति । घण्टयति ।

### नाग्लोपि-शास्वृदिताम् ७।४।२

णिच्यग्लोपिनः शास्ते ऋदितां चोपधाया ह्रस्वो न चङ्परे णौ । अलुलोकत्(२) । अलुलोचत् । वर्तयति । बर्धयति । 'आधृषाद्वा' । इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य । **युज पृच संयमने** । योजयति । योजति । अयौक्षीत् । पर्चयति । पर्चति । पर्चिता । अपर्चीत् । **अर्च पूजायाम्** । **षह मर्षणे** । साहयति । 'स एवायं नागः सहति कलभेभ्यः परिभवम् । **वृञ् वरणे** । वारयति । वरति, वरते । **जॄ वयोहानौ** । जारयति, जरति । **शिष असर्वोपयोगे** । शेषयति । शेषति । शेष्टा । अशिक्षत् । **तप दाहे** । तापयति । तपति । तप्ता । **तृप तृप्तौ** । तर्पयति । तर्पति । **हिसि हिंसायाम्** । हिंसयति । हिंसति । **अर्ह पूजायाम्(३)** । **छद अपवारणे**।

---

(१) अचीकृतत्, 'इत्यत्र उपधायाश्च' इति इर् प्राप्तः, अपीपृथत्, इत्यादौ 'अर्' प्राप्तः 'अमीमृजत्' इत्यत्र 'मृजेर्वृद्धिः' इति 'आर्' प्राप्तः । सर्वत्र तेषामयमपवादः 'उर्ऋत्, इति ।

(२) ह्रस्वाभावान्न सन्वद्भावदीर्घौ ।

(३) आर्जिहत्, णिचासह द्वित्वात्सन्वद्भावोनेति तद्विषये विहितो यो दीर्घो लघोरिति दीर्घः । स न प्रवर्तते ।

स्वरितेत् । छादयति । छदति, छदते । **धूञ् कम्पने** । (धूञ् प्रीञोर्नुक्) णौ । धूनयति (१) । धवति, धवते ।

**प्रीञ् तर्पणे** । प्रीणयति । प्रीणयते । प्रीयति, प्रीयते । **वच परिभाषणे** । वाचयति । वचति । वक्ता । अवाक्षीत् । **मान पूजायाम्** । मानयति । मानति । मानिता । **भू प्राप्तौ आत्मनेपदी** । भावयते, भावते । णिच् संनियोगेनैवात्मनेपदमित्येके । भवति । **मार्ग अन्वेषणे** । **धृष प्रसहने** । धर्षयति, धर्षति । अथादन्ताः । **कथ वाक्यप्रबन्धे** । अल्लोपः (२) ।

**अचः परस्मिन्पूर्वविधौ १।१।५७**

परनिमित्तोऽजादेशः स्थानिवत्स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवत्वान्नोपधाया वृद्धिः (३) । कथयति । अग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचकथत् । **गण संख्याने** (४) । गणयति ।

**ई च गणः ७।४।९७**

गणेरभ्यासस्य इत् स्यात् । चादच्चङ्परे णौ । अजीगणत् । अजगणत् । **रच प्रतियत्ने** । रचयति । अररचत् । **कल गतौ संख्याने च** । कलयति । अचकलत् । **मह पूजायाम्** । महयति । **सूच पैशून्ये** । सूचयति । अषोपदेशत्वान्न षः । असुसूचत् । **कुमार क्रीडायाम्** । कुमारयति । अचुकुमारत् । **ऊन परिहाणे** । ऊनयति । ओः पुयण्जीति सूत्रे पयथोरिति वक्तव्ये वर्णप्रत्याहारजग्रहो लिङ्गम् । णिच्य च आदेशो न द्वित्वे कर्तव्ये इति । यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठितरूपे वाऽवर्णो लभ्यते तत्रैवायं निषेधः । ज्ञापकस्य सजातीयापेक्षत्वात् । तेनाचिकीर्तदित्यादि सिद्धम् । प्रकृते तु न शब्दस्य द्वित्वम् । तत उत्तरखण्डे अल्लोपः । औननत् (५) ।

---

(१) धूनयति अयं स्वादौ क्र्यादौ तुदादौ चुरादौ च, स्वादौ ह्रस्वश्च । तथा चाह—कविरहस्ये —
**धुनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ।**
**वायुर्विधूनयति चम्पकपुष्परेणून् तत्कानने धवति चन्दनमञ्जरीश्च ॥**

(२) णिचि 'अतोलोपः' इति अन्त्यावयवस्याऽकारस्य लोपः ।

(३) अल्लोपस्येत्यर्थः ।

(४) अयमपि अग्लोपी ।

(५) ऊन परिहाणे 'इत्यस्य' 'लुङि' 'औननत्' इति रूपसिद्धिः । ननु—द्वित्वात्परत्वादन्तरङ्गत्वाच्च अतो लोपे कृते णिचासहनिशब्दस्य द्वित्वे 'औनिनत् इति रूपं स्यान्न तु, औननत् इति । द्विर्वचनेऽचीति सूत्रन्तु अत्र नैव प्रवर्तते, अल्लोपनिमित्तस्य णिचो द्वित्वनिमित्तत्वाभावात् ।

**ध्वन शब्दने**। ध्वनयति। अदध्वनत्। **सूत्र वेष्टने**। सूत्रयति। **मूत्र प्रसवणे**। मूत्रयति। अदन्तत्वसामर्थ्याण्णिज्विकल्पः। मूत्रति। आगर्वादात्मनेपदिनः। **पद गतौ**। पदयते। अपपदत। **गृह ग्रहणे**। **मृग अन्वेषणे**। मृगयते। **शूर वीर विक्रान्तौ**। शूरयते। वीरयते। **गर्व माने**। गर्वयते।

## ॥ इति चुरादयः ॥

### अभ्यासः

**प्रश्न १. चोर्यात्, इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ०– स्तेयार्थकात् चुर् धातोः "सत्याप–पाश–रूप–वीणा–तूल–श्लोक–सेना–लोम–त्वच–वर्म–वर्ण–चूर्ण–चुरादिभ्यो णिच्" इति स्वार्थे णिचि अनुबन्धलोपे, आर्धधातुकत्वे लघूपधगुणे चोरि, इत्यस्य सनाद्यन्ता इति धातुत्वे धातुत्वादाशिषिलिङि यासुटि लस्य तिपि सार्वधातुकसंज्ञां प्रबाध्य" लिङाशिषि" इत्यार्धधातुकत्वे तेरिकारलोपे सरकारलोपे च जाते णेरनिटीति णेर्लोपे चोर्यात्, इति रूपम्।

**प्रश्न २. अवगाहनार्थकात् पीड धातोर्लुङि प्रथमपुरुषैकवचने जायमानरूपं साधयत**

उ०– पीड धातोः स्वार्थे णिचि पीडि धातुत्वाल्लुङि अटि लस्य तिपि सार्वधातुकत्वे प्राप्तं शपं प्रबाध्य च्लौ च्लेश्चङि "भ्राज–भास–भाष–दीप–जीव–मील–पीडामन्यतरस्याम्" इति पाक्षिके, उपधाह्रस्वे "चङि"इति द्वित्वेऽभ्यासादिकार्ये सन्वद्भादीर्घयोः सञ्जातयोः "इतश्चेतीकारलोपे, पक्षे दीर्घाभावे अपिपीडत्, इति रूपद्वयम्।

**प्रश्न ३. अलुलोकत् इत्यस्य साधन प्रक्रियां दर्शयत**

उ०– ऋकारेत्संज्ञकात् लोकृ धातोः स्वार्थे णिच्यनुबन्धोलोपे सनाद्यन्ता इति धातुत्वे लुङि अटि लस्य तिपि सार्वधातुकत्वे प्राप्तं शपं प्रबाध्य च्लौ "च्लेश्चङि" अलोक् इ अ ति इति स्थिते प्राप्तस्योपधाह्रस्वस्य "नाग्लोपिशास्वृदिताम्" इति निषेधे द्वित्वेऽभ्यासादिकार्ये तेरिकारलोपे अलुलोकत्, ह्रस्वाभावान्न सन्वद्भावदीर्घौ।

**प्रश्न ४. कथयति, इति प्रयोगः कया रीत्या सिध्यति लिखतः**

उ०– कथ धातोः स्वार्थे णिच्यनुबन्धलोपे आर्ध धातुकत्वे "अतो लोपः" इति अल्लोपे कथि, इत्यस्य सनाद्यन्ता इति धातुत्वे लटि तिपि सार्वधातुकत्वे शपि गुणेऽयादेशे कथयति, अत्र वृद्ध्यवसरो नशङ्कनीयः, अल्लोपस्य परनिमित्ततया "अचः परस्मिन्पूर्वविधौ" "इति स्थानिवद्भावेनोपधाविघातात्।

प्रश्न ५. औननत् इत्यस्य सिद्धिप्रकारो दर्शनीयः

उ०– उन धातोः स्वार्थे णिच्यनुबन्धलोपे उन इ सनाद्यन्ता इति धातुत्वे लुङि लस्य तिपि सार्वधातुकत्वे प्राप्तं शपं प्रबाध्य च्लौ च्लेश्चङि णेरार्धधातुकतया अल्लोपे प्राप्ते णिचि, अजादेशो न द्वित्वे कर्तव्ये इति नियमेन अल्लोपात्पूर्वं द्वित्वेऽभ्यासादिकार्येऽल्लोपेऽटिप्राप्तेऽजादित्वादाटिवृद्धौ तेरिकारलोपे औननत्, इतिरूपम् ।

## अभ्यासार्थं प्रश्नाः

(१) चोरयति, अचूचुरत्, मन्त्रयते, अपीपिडत्, कीर्त्तयति, घूनयति, अजीगणत्, औननत् एतेषां प्रयोगाणां साधनप्रक्रियां सम्यक् प्रतिपादयत ।

(२) निम्नांकिङतानां सूत्राणामर्थान् विलिख्य तेषामेकैकमुदाहरणञ्च देयम्–

(क) अत्स्म–दृ–त्वर–प्रथ–म्रद–स्तृ–स्पशाम् ।

(ख) उऋर्त् ।

(ग) उपधायाश्च।

(घ) नाग्लोपिशास्वृदिताम् ।

(ङ) अचः परस्मिन् पूर्वविधौ ।

(३) चुर स्तेये, पीड अवगाहे कथ वाक्यप्रबन्धे एषां धातूनां नवसु लकारेषु प्रथमपुरुषस्य एकवचने संपत्स्यमानानि रूपाणि विलिखत ।

(४) अधस्तनानि वाक्यानि शोधयत

(क) चौरो निर्धनस्यापि धनानि चोरन्ति ।

(ख) प्रहरिणोऽपराधिनं ग्रहीतुं परस्परं मंत्रयन्ती ।

(ग) ते बालकाः किर्त्तयन्ती ।

(घ) विद्या नरं सत्कार्ये योजएन्ती ।

(ङ) भक्ता ईश्वरर्महन्ति ।

(५) चोर्यात्, अपीपिडत्, अपूपुजत्, शेषयति, धावयति, मृगयते एते प्रयोगाः वाक्ये योजनीयाः ।

# अथ णिच्प्रक्रिया

**स्वतन्त्रः कर्ता १।४।५४**

क्रियायां स्वातन्त्र्येणविवक्षितोऽर्थः कर्ता स्यात् ।

**तत्प्रयोजको हेतुश्च १।४।५५**

कर्तृ प्रयोजको हेतु संज्ञः कर्तृ संज्ञश्च स्यात् ।

**हेतुमतिच ३।१।२६**

प्रयोजकव्यापारे प्रेरणादौ वाच्ये धातोर्णिच् । भवन्तं प्रेरयति भावयति ।

**ओः पुयण्ज्यपरे ७।४।८०**

सनिपरे यदङ्गं तदवयवो योऽभ्यासस्तस्योत इत्स्यात् पवर्ग यण्जकारेष्ववर्णपरेषु परतः अबीभवत् (१) । अपीपवत् । **मूङ बन्धने** । अमीभवत् । अयीयवत् । **रु शब्दे** । अरीरवत्। अलीलवत् । अजीजवत् । पुयण्जीति किम् ? नुनावयिषति । अपरे किम् ? बुभूषति ।

**स्रवति-श्रृणोति-द्रवति-प्रवति-प्लवति-च्यवतीनां वा ७।४।८१**

एषामभ्यासोकारस्येत्वं वा सनि अवर्णपरे धात्वक्षरेपरे । असिस्रवत् । इत्यादि । अवर्णपरे किम् ? अशूशुषत् । णिजन्ताण्णिच् । परत्वाद् वृद्धौ प्राप्तायाम् । (**ण्यल्लोपावियङ यण्गुणवृद्धि दीर्घेभ्यः पूर्वविप्रतिषेधेने** ति) णिलोपः । चोरयति (२) । णौचङीति ह्रस्वः ।दीर्घोलघोरिति दीर्घः । न चाग्लोपित्वाद् द्वयोरप्यसंभवः, ण्यायाकृतिनिर्देशात् । अचूचुरत्। **टु ओ श्वि गतिवृद्ध्योः**।

---

(१) भूधातोर्ण्यन्ताल्लुङि अडागमे च्लेश्चङि 'णिच्य च आदेशो न द्वित्वे कर्तव्ये' इति पूर्व वृद्ध्यभावे 'भू' इत्यस्य द्वित्वेऽभ्यासकार्ये (भस्य बत्वे ह्रस्वे च) अबु भू+इ+अत्, इति स्थितौ परस्य वृद्धौ आवादेशे 'णौ चङ्युपधायाः' इति ह्रस्वे सन्वद्भावेऽभ्यासोकारस्येत्वे णिलोपे 'दीर्घो-लघोः' इति दीर्घः । अबीभवत् ।

(२) स्वार्थणिजन्ता च्चुर धातोः प्रेरणार्थके णिचि चोरि+इ+अ ति इत्यवस्थायां 'णेरनिटि' इति णि लोपः प्राप्नोति, अचो ञ्णिति, इति वृद्धिश्चेत्युभयोः प्राप्तौ 'विप्रतिषेधे परं कार्यम्' इति परत्वाद् वृद्धावेव प्राप्तायां ण्यल्लोपावियङ यण् गुणवृद्धि दीर्घेभ्यः पूर्वविप्रतिषेधेनेति णिलोपः ।

**णौ च संश्चङोः २।४।५१**

सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यात् । (**संप्रसारणं तदाश्रयं च कार्यं बलवत्**) इति वचनात्संप्रसारणम् । अशूशवत् । अलघुत्वान्न दीर्घः । अशिश्वयत् ।

**स्तम्भु–सिवु–सहां चङि ८।३।११६**

उपसर्गादेशां सस्य षो न स्याच्चङि । अवातस्तम्भत् । पर्यसीषिवत् । न्यसीषहत् ।

**स्वापेश्चङि ६।१।११८**

ण्यन्तस्य स्वापेश्चङि संप्रसारणम् । असूषुपत् ।

**हनस्तोऽचिण्णलोः ७।३।३२**

चिण्णल्वर्जे ञिति णिति । घातयति ।

**अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुग्णौ ७।३।३६**

स्थापयति ।

**तिष्ठतेरित् ७।४।५**

उपधायाश्चङ्परे णौ इदादेशः स्यात् । अतिष्ठिपत् (१) ।

**जिघ्रतेर्वा ७।४।६**

उपधाया इत्वं वा चङ्परे णौ । अजिघ्रपत्, अजिघ्रिपत् ।

**शा-च्छा-सा-ह्वा-व्या-वेपां युक् णौ ७।३।३७**

शाययति । अशीशयत् । ह्वाययति ।

**ह्वः संप्रसारणम् ६।१।३२**

सन्परे चङ्परे च णौ ह्वःसंप्रसारणं स्यात् । ( **काण्यादीनां वा** ) चङ्परे णौ उपधाया ह्रस्वो वा । रण्यन्ताः कण–रण–भण–श्रण–लुप–हेठाः–षट् भाष्ये । ह्वायि–वाणि–लोटि–

---

(१) अस्थाप्+इ+अत् इति स्थितौ द्वित्वेऽभ्यासकार्ये अ थ स्थाप् इ अ त् इत्यत्र अभ्यासस्य चर्त्वे, उपधाह्रस्वे अभ्यासस्य 'सन्यतः' इतीत्वे षत्वे ष्टुत्वे अतिष्ठप् इ अत्' इति स्थितौ उपधाया इत्वे णिलोपे अतिष्ठिपत् ।

लोपयश्चत्वारोऽधिकान्यासे। चाणि–लोठि अप्यन्यत्र। इत्थं काण्यादयो द्वादश। अजूहवत् (१), अजुहावत्। पाययति।

**लोपः पिबतेरीच्चाभ्यासस्य ७।४।४**

पिबतेरुपधायालोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ। अपीप्यत् (२)। (पातेर्णौ लुग्वक्तव्यः) पुकोऽपवादः। पालयति।

**वो विधूनने जुक् ७।३।३८**

णौ। वाजयति। विधूनने किम्? केशान्वापयति।

**शदेरगतौ तः ७।३।४२**

णौ। शातयति। गतौ तु–गाः शादयति गोविन्दः। गमयतीत्यर्थः।

**रुहः पोऽन्यतरस्याम् ७।३।४३**

णौ। रोपयति। रोहयति।

**दोषो णौ ६।४।९०**

दुष्यतेरुपधाया ऊत्स्याण्णौ। दूषयति।

**वा चित्त विरागे ६।४।९१**

विरागोऽप्रीतता। चित्तं दूषयति दोषयति वा कामः।

**उभौ साभ्यासस्य ८।४।२१**

साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति। प्राणिणत् (३)।

**णौ गमिरबोधने २।४।४६**

इणः। गमयति। बोधने तु–प्रत्याययति। **घट चेष्टायाम्।** घटादयो मितः। जनी–जृष्–क्नसु–रञ्जोऽमन्ताश्च, मितः। 'ज्वल–ह्वल–ह्मल– नमामनुपसर्गाद्वा' एषां मित्वं वा।

---

(१) ह्वेञ् धातोर्लुङि–अह्वा इ अत्, इति स्थिते संप्रसारणे पूर्वरूपे 'हु' इत्यस्य द्वित्वे, उत्तरखण्डस्य वृद्ध्यवादेशयोर्वैकल्पिक उपधाह्रस्वे सन्वद्भावे दीर्घे च– 'अजूहवत्।

(२) पायीत्यस्माल्लुङि–चङि पाय् शब्दस्य द्वित्वे हलादिशेषेऽभ्यासाऽऽकारस्येत्वे उपधालोपे च 'अपीप्यत्।'

(३) प्र अन्—इ+अत्, इति स्थिते णत्वस्यासिद्धत्वात्, नीत्यस्य द्वित्वे उत्तरखण्डेऽभ्यास नकारेण व्यवधानादप्राप्ते णत्वे, उभयोर्णत्वार्थम्, उभौ साभ्यासस्येति सूत्रम्।

'ग्ला–स्ना–वनु–वमां च' अनुपसर्गादिषां मित्वं वा । न कम्यमिचमाम्' अमन्तत्वात्प्राप्तं मित्वमेषां न । 'यमोऽ परिवेषणे' मित्वं न । स्खदिरवपरिभ्यां च मित्वं न ।

**मितां ह्रस्वः ६।४।९२**

ज्ञपादीनां घटादीनां च णावुपधाया ह्रस्वः । घटयति । अजीघटत् । **ज्ञप ज्ञाने ज्ञापने च** । ज्ञपयति । अजिज्ञपत् (१) ।

**रभेरशब्लिटोः ७।१।६३**

नुमचि ।

**लभेश्च ७।१।६४**

अररम्भत् । अललम्भत् । ईर्ष्ययति । (**ईर्ष्यते स्तृतीयस्येति वक्तव्यम्**) तृतीय व्यञ्जनस्यतृतीयैकाच इति वार्थः । आद्ये षस्य द्वित्वम्, वारयितुमिदम् । द्वितीयेत्वजादेर्द्वितीयस्येत्यस्यापवादतया सन्नन्ते प्रवर्तते । ऐर्ष्यियत् (२) । द्वितीय व्याख्यायां णिजन्ताच्चङि ष एव अभ्यासे श्रूयते । हलादिः शेषात् । द्वित्वं तु द्वितीयस्यैव । तृतीय भावेन प्रकृत वार्त्तिका प्रवृत्तेः । ऐर्ष्यिष्यत् ।

## ।। इति णिजन्तप्रक्रिया ।।

अभ्यासः

**प्रश्न १. अमीमवत् इति प्रयोगः कया रीत्या सम्पद्यते लिखत**

उ०– ङकारानुबन्धकाद् मूङ धातोः "हेतुमति च" इति प्रयोजके कर्तरि णिच्यनुबन्धलोपे "सनाद्यन्ताधातवः" इतिधातुत्वे धातुत्वाल्लुङ्चनुबन्धलोपेऽटि लस्य तिपि सार्वधातुकत्वे शपं प्रबाध्य च्लौ च्लेश्चङि अ मू इ अ ति इति स्थिते णिच्यजादेशो न द्वित्वे कर्तव्ये" इति पूर्वं वृद्ध्यभावे मू इत्यस्य द्वित्वेऽभ्यासत्वेऽभ्यासस्याचो ह्रस्वे अमुमूइ अति इति जाते परस्यवृद्धौ, आवादेशे णौचङ्युपधायाः, इति ह्रस्वे सन्वद्भावे "ओःपुयण्ज्यपरे" इति अभ्यासोकारस्येत्वे णेर्लोपे दीर्घो लघोरिति दीर्घे तेरिकारलोपे च अमीमवत्, इति रूपम् ।

---

(१) चङि द्वित्वे हलादिशेषेऽभ्यासस्येत्वे संयोगपरकत्वेनलघुत्वाभावात्, दीर्घोलघोरिति न दीर्घः ।

(२) ईर्ष्य धातोर्ण्यन्ताल्लुङि च्लेश्चङि णि सहितयोः षकारयकारयोर्द्वित्वं प्राप्नोति, तत्र षस्य द्वित्वं वारयितुमिदं वार्तिकमारभ्यते ।

प्रश्न २. अपीप्यत्, इति कथं सिध्यति लिखत–

उ०– पानार्थकात् पा धातोः प्रयोजके कर्तरि णिच्यनुबन्धलोपे "अर्ति–ह्री–व्ली" इति प्राप्तं पुकं प्रबाध्य "शा–च्छा–सा–ह्वा–व्या–वेपां युक् णौ" इति युक्यनुबन्धलोपे पाय् इ इत्यस्य सनाद्यन्ताः" इति धातुत्वे धातुत्वाल्लुङि अटि लस्य तिपि सार्वधातुकत्वे प्राप्तं शपं प्रबाध्य च्लौ च्लेश्चङि पायि अति इति स्थिते पाय् इत्यस्य द्वित्वेऽभ्यासत्वे हलादिशेषे "लोपः पिबतेरीच्चाभ्यासस्य" इति उपधालोपेऽभ्यासस्य ईदन्तादेश्चेति णेर्लोपे तेरिकारलोपे च अपीप्यत्, इति रूपम्।

प्रश्न ३. घातयति, इत्यस्य सिध्दिप्रकारो दर्शनीयः

उ०– हन् धातोः प्रयोजके कर्तरि णिच्यनुबन्धलोपे उपधावृद्धौ "हनस्तोऽचिण्णलोः" इति नकारस्य तकारादेशे "होहन्तेर्ञ्णिन्नेषु" इति कुत्वे घाति इत्यस्य सनाद्यन्ता इति धातुत्वे धातुत्वाल्लटि तिपि सार्वधातुकत्वे शपि गुणेऽयादेशे च घातयति, इतिरूपम् ।

# ण्यन्तक्रियापदेषु वाक्यरचना

प्रेरणार्थकानां ण्यन्तधातूनां प्रकारद्वयं भवति । (१) गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मक धातवः, हिंसार्थक भक्ष्धातुः, दृश्धातुः, जल्पादिधातवः । (२) उक्त भिन्नान्यधातवः। गत्याद्यर्थक धातुनामण्यन्तावस्थाया यः कर्ता स ण्यन्तावस्थायां कर्मसंज्ञको भवति । कदाचिदन्यस्यामपि स्थितौ विभाषया एतादृशीस्थितिर्जायते । अस्य समग्रं विवेचनं तु कारके स्पष्टं भविष्यति । अस्योदाहरणं यथा–अण्यन्तावस्थायाम्– (क) बालको विद्यालयं गच्छति तं माता प्रेरयति । ण्यन्तावस्थायाम्– (ख) माता बालकं विद्यालयं गमयति । गत्यादिभिन्नधातूनां ण्यन्तावस्थायाम् तु प्रयोज्य कर्तरि तृतीया, प्रयोजके कर्तरि प्रथमैव ।

अधोऽङ्कितया तालिकयाऽपि एतत् कथनं स्पष्टं भवति–




**वाक्यम्**– माता बालकं विद्यालयं गमयति । **वाक्यम्**– गुरुः छात्रेण पुस्तकं पाठयति ।

## अभ्यासार्थं प्रश्नाः

(१) स्वार्थे णिचि हेतुमति णिचि च को भेदः।

(२) अबीभवत्, अजिघिपत्, शाययति, अपीप्यत्, प्राणिणत्, घटयति, अललम्भत्, ऐर्षिष्यत्, एतेषां साधुत्वप्रकारं सम्यग् दर्शयत ।

(३) असिस्रवत्, अचूचुरत्, अवातस्तभत्, शाययति, वाजयति, दूषयति एषु विशेष सूत्रं तत्कार्यं च दर्शयत।

(४) अधोऽङ्कितानां सूत्रणामर्थान् विलिखत

(क) ओः पुयण्ज्यपरे ।
(ख) स्वापेश्चङि।
(ग) जिघ्रतेर्वा।
(घ) वा चित्तविरागे ।
(ङ) णौ गमिरबोधने।

(५) अधस्तनवक्यानि संशोध्यन्ताम्

(क) सुशीलं छात्रं गुरुर्विद्वांसं कुर्वन्ति ।
(ख) वशिष्ठो दिलीपमाश्रममस्थात् !
(ग) माता पुत्रं विद्यालयं गच्छति।
(घ) दुःसङ्गतिस्तु यं कमपि नरं दूसयते ।
(ङ) गङ्गाजलं पापिनोऽपि पुरुषान् पाययन्ति ।

(६) पूञ् पवने, रु शब्दे, घ्रा गन्धोपादाने, शद्लृ विशरणगत्यवसादनेषु, डुलभष् प्राप्तौ णिजन्तानामेषां धातूनां लुङि सिपि पृथक् रूपाणि साधयत ।

(७) भू सत्तायाम्, श्रु श्रवणे, हन हिंसागत्योः, बृष, वैकृत्ये, इण् गतौ णिजन्तानामेषां धातूनां लुङि उत्तमपुरुषे समग्राणि रूपाणि विलिखत ।

(८) अजीजवत्, पर्यसीषिवत्, स्थापयति, पालयति अजिज्ञपत्, ईर्ष्ययति एतानि क्रियापदानि प्रयुज्य पृथक् षड् वाक्यानि रचयत ।

# अथ सन्नन्तप्रक्रिया

**धातोः कर्मणः समान कर्तृकादिच्छायां वा ३।१।७**

इषि कर्मणः, इषिणैककर्तुकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्। धातोर्विहितत्वादिह सन आर्धधातुकत्वम्। **पठ व्यक्तायां वाचि।** इट्।

**सन्यङोः ६।१।९**

सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वेस्तोऽजा देस्तु द्वितीयस्य। सन्यतः। पठितुमिच्छति पिपठिषति (१)। कर्मणः किम्-गमनेनेच्छतीति करणान्माभूत्। समान कर्तृकात् किम्? शिष्याः पठन्त्वितीच्छतिगुरुः। वा ग्रहणाद् वाक्यमपि।

**शैषिकान्मतुबर्थीयाच्छैषिको मतुवर्थिकः।**
**सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥१॥**

तेन पिपठिषितुमिच्छतीति वाक्यमेव। 'लुङ लनोर्घस्लृ'।

**सः स्यार्धधातुके ७।४।४९**

सस्य तः स्यात्सादावार्धधातुके। अत्तुमिच्छति जिघत्सति। एकाच इति नेट्।

**अज्झनगमां सनि ६।४।१६**

अजन्तानां हन्तेरजादेश गमेश्चदीर्घो झलादौ सनि।

**इको झल् १।२।९**

इगन्ताज्झलादिः सन्कित्। कर्तुमिच्छति चिकीर्षति (२)। जिघांसति।

---

(१) पठ धातोरिच्छायां सनि 'सनाद्यन्ता' इति धातुत्वे 'आर्धधातुकस्ये स्येती' टि सन्यङोरिति द्वित्वे हलादिशेषे 'सन्यतः' इति, अभ्यासस्येत्वे सनः सकारस्य षत्वे रूपं पिपठिषति। लिटि-पिपठिषाञ्चकार। लुङि-अपिपठिषीत्।

(२) कृ धातोरिच्छासनि 'एकाच उपदेशे' इतीडभावे 'अज्झनगमां..' इति दीर्घे इको झल्, इति कित्वेन गुणाभावे 'ऋतइद्धातोः इति–इत्वे रपरत्वे 'किर'–इत्यस्य द्वित्वेऽभ्यासकार्यें 'हलि च' इत्यभ्यासोत्तरखण्डस्य दीर्घे रेफ रूपेण परत्वात्सनः सस्य षत्वे (लटि तिपि शपि पररूपे) चिकीर्षति।

**सनि च २।४।४७**

इणो गमिः स्यात्सनि न तु बोधने। जिगमिषति। बोधने तु प्रतीषिषति।

**इङश्च २।४।४८**

इङो गमिः स्यात्सनि। अधिजिगांसते।

**रुद-विद-मुष-ग्रहि-स्वपि-प्रच्छ संश्च १।२।८**

एभ्यः सन् क्त्वा च कितौ स्तः। रुरुदिषति। विविदिषति। मुमुषिषति

**सनि ग्रहगुहोश्च ७।२।१२**

ग्रहेर्गुहेरुगन्ताच्च सन इण्न। जिघृक्षति।

**हलन्ताच्च १।२।१०**

इक्समीपाद्धलः परो झलादिः सन्कित्। **गुहू संवरणे**। जुघुक्षति। सुषुप्सति।

**किरश्च पञ्चभ्यः ७।२।७५**

कॄ गॄ दृङ धृङ प्रच्छ एभ्यः सन इट्। पिपृच्छिषति (१)। चिकरिषति (२)। जिग-रिषति। जिगलिषति (३)। (अत्रेटोदीर्घोनेष्टः)॥

**पूर्ववत्सनः १।३।६२**

सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। दिदरिषते। दिधरिषते। बुभूषति।

**सनीवन्तर्ध-भ्रस्ज-दम्भु-श्रि-स्वृ-यूर्णु-भर-ज्ञपि सनाम् ७।२।४९**

इवन्तेभ्य ऋधादिभ्यश्च सन इड् वा।

**च्छ्वोः शूडनुनासिके च ६।४।१९**

सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् एतावादेशौस्तोऽनुनासिके क्वौ झलादौ क्ङिति च। यण्। द्वित्वम्। दुद्यूषति (४)। दिदेविषति॥

---

(१) प्रच्छ धातोः सनि रुदविदेति सनः कित्वाद् ग्रहिज्येति संप्रासरणं, द्वित्वादि 'किरश्च पञ्चभ्यः' इति सन इट्, सनः सस्य षत्वे पिपृच्छषति।

(२) कॄ विक्षेपे-इत्यस्मात्सनि किरश्चेति नित्यमिट्, द्वित्वादि-अभ्यासोत्तरस्य गुणे सनः षत्वे चिकरिषति।

(३) अचिविभाषेति लत्व विकल्पः।

(४) दिवु धातोः सनि सनिवन्तर्धेति' इड् विकल्पे, इडभावे 'हलन्ताच्चेति सनः कित्वे 'च्छोः शूड......' इति वस्योठि यणि द्यु इत्यस्य द्वित्वे हलादिशेषेऽभ्यासह्रस्वे सनः-षत्वे दुद्यूषति। इट्पक्षे दिदेविषति। सनः कित्वाभावाद्लघूपध गुणः।

## स्तौतिण्योरेव षण्यभ्यासात् ८।३।६१

अभ्यासेण: परस्य स्तौतिण्यन्तयोरेव सस्य षः षभूते सनि नान्यस्य । तुष्टूषति । सिषाधयिषति । स्तौतिण्योः किम् ? –सुस्यूषति, सिसेविषति ।।

## आप्–ज्ञप्यृधामीत् ७।४।५५

एषामच ईत्स्यात्सादौ सनि।

## अत्र लोपोऽभ्यासस्य ७।४।५८

सनिमीमेत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः । आप्तुमिच्छति–ईप्सति। अधितुमिच्छति–ईर्त्सति । अर्दिधिषति । बिभ्रज्जिषति । बिभर्ज्जिषति, बिभ्रक्षति, बिभर्क्षति ।

## दम्भ इच्च ७।४।५६

दम्भेरच इत्स्यादीच्च सादौ सनि । हलन्तादित्यत्र हल्ग्रहणं जातिपरम् । तेन सनः कित्वान्नलोपः । धिप्सति, धीप्सति । दिदम्भिषति। शिश्रीषति, शिश्रयिषति । उदोष्ठ्यंत्युत्वम् । सुस्वूर्षति, सिस्वरिषति । युयूषति, यियविषति । 'विभाषोर्णोः' इति ङित् । ऊर्णुनुविषति, ऊर्णुनविषति, ऊर्णुनूषति । बिभरिषति, बुभूर्षति । जिज्ञपयिषति, ज्ञीप्सति । सिसनिषति, सिषासति । (आशङ्कायां सन्वक्तव्यः) श्वा मुमूर्षति (१) । (तनि–पति–दरिद्रातिभ्यः सनो वेड्वाच्यः) तितनिषति ।

## तनोतेर्विभाषा ६।४।१७

उपधाया दीर्घो झलादौ सनि । तितांसति, तितंसति । कूलं पिपतिषति ।।

## सनिमी–मा–घु–रभ–लभ–शक–पत–पदामच इस् ७।४।५४

एषामच इस् स्यात् सादौ सनि ।। अभ्यासलोपः । पित्सति । दिदरिद्रिषति, दिदरिद्रासति।

## मुचोऽकर्मक स्य गुणो वा ७।४।५७

सादौ सनि । अभ्यासलोपः मोक्षते– मुमुक्षते (२), वा वत्सः स्वयमेव । अकर्मकस्य किम् ? मुमुक्षति मुमुक्षते वा वत्सं कृष्णः ।।

---

(१) मृङ धातोः सनि 'अज्झनेति दीर्घे इको झलिति सनः कित्वम् 'उदोष्ठ्यपूर्वस्येति–उत्वे रपरत्वे द्वित्वे हलिचेति दीर्घे सनः षत्वे मुमूर्षति–शङ्कितमरणो भवतीत्यर्थः । म्रियतेर्लुङ लिङोश्चेत्यत्र सनो न इत्यनुवर्त्य सन्नन्तानात्मनेपदमिति ।

(२) मुच् धातोः सनि 'मुचोऽककर्मस्येति गुणाभावपक्षे चोः कुरिति कुत्वें सनः षत्वे मुमुक्षते । गुणपक्षे चात्र लोपोऽभ्यासस्येत्यभ्यासलोपे मोक्षते । अकर्मकस्येत्युक्तेः कर्मणः कर्तृत्व विवक्षायामयं विकल्पोऽन्यत्र तु मुमुक्षतीत्येव ।

## इट् सनि वा ७।२।४१

वृङ वृञ्भ्यामृदन्ताच्च सन इड् वा । विवरिषते (१), विवरीषते, वुवूर्षते (२) । विवरिषति, विवरीषति, वुवूर्षति । तितरिषति (३), तितरीषति, तितीर्षति ।

## स्मि–पूङ–रञ्ज्वशां सनि ७।२।७४

स्मिङ पूङ ऋ अञ्जू अश् एभ्य: सन इट् । सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषति । **गुप गोपने । तिज निशाने । कित निवासे रोगापनयने च । मान पूजायाम् । बधबन्धने । दान खण्डने । शान तेजने ।**

## गुप्तिज्किद्भ्यः सन् ३।१।५

## मान्बध–दान्–शान्भ्यो दीर्घश्चाभ्यासस्य ३।१।६

सूत्रद्वयोक्तेभ्य: सन् मानादीनामभ्यासस्येकारस्य दीर्घश्च। गुपेर्निन्दायाम्– तिजे: क्षमायाम् । कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च। मानेर्जिज्ञासायाम् । बधेश्चित्त विकारे । दानेरार्जवे । शानेर्निशाने । गुप् प्रभृतय: किद्भिन्ना निन्दाद्यर्थका एवाऽनुदात्तेत: । दान शानौ तु स्वरितेतौ । एष्वर्थेष्वे ते नित्य सन्नन्ता: । अर्थान्तरेत्वननुबन्धकाश्चुरादय: । अनुबन्धस्य केवले ऽचरितार्थत्वात्सन्नन्तात्पदव्यवस्था । धातोरिति–अविहितत्वात्सनोऽत्र नार्धधातुकत्वम् । तेनेड्गुणौन । जुगुप्सते । तितिक्षते । चिकित्सति । मीमांसते । बीभत्सते । दीदांसति । दीदांसते । शीशांसति, शीशांसते । णिचि तु । गोपयति । गोपयते ।

## ।। इति सन्नन्तप्रक्रिया ।।

### अभ्यास:

**प्रश्न १. जिघत्सति इत्यस्य साधुत्वं दर्शयत**

उ०– अत्तुमिच्छति, इति स्थिते अद् धातो: "धातो: कर्मण: समानकर्तृकादिच्छायां वा" इति इच्छार्थे सन्यनुबन्धलोपे "लुङसनोर्घस्लृ" इति अदो घस्लादेशेऽनुबन्धलोपे आर्धधातुकत्वे

---

(१) वृङ धातो: सनि 'सन:' इट् सनि वेति इट् पक्षे 'वृतो वेति दीर्घे वैकल्पिके द्वित्वादौ विवरिषते, विवरीषते ।

(२) इडभावपक्षे च 'अज्झनेति दीर्घे' उदोष्ठ्येत्युत्वे रपरत्वे– द्वित्वादौ हलिचेति दीर्घे वुवूर्षते ।

(३) तॄ धातो: सनि 'इट् सनिवेति' इट पक्षे द्वित्वादौ गुणेऽभ्याससस्येत्वे 'वृतोवेति' इटो दीर्घ: विकल्पे तितरिषति, तितरीषति । इडभावपक्षे च ॠत इद् धातोरिति–इत्वे रपरत्व हलिचेति दीर्घे तितीर्षति ।

प्राप्तस्येडागमस्यैकाच्त्तया निषेधे "सन्यङोः" इति द्वित्वेऽभ्यासादिकार्ये सन्यतः, इति अभ्यासस्येत्वे जिघस् स इति जाते – "सः स्यार्धधातुके" इति सस्य तत्वे जिघत्स इत्यस्य सनाद्यन्ताः इति धातुत्वे धातुत्वाल्लटि तिपि शपि पररूपे जिघत्सति, इति रूपम् ।

**प्रश्न २. ईप्सति, इत्यस्य साधुत्वं वर्णयत**

उ०– आप्तुमिच्छति, इति विग्रहे आप् धातोः सनि आर्धधातुकत्वे प्राप्तस्येडागमस्य निषेधे आप् स इति स्थिते आप्ज्ञप्यृधामीत् इत्याकारस्येत्वे ईप्स इत्यत्र अजादेर्द्वितीयस्ये-तिप्स इत्यस्य द्वित्वेऽभ्यासत्वे "अत्रलोपोऽभ्यासस्य" इति अभ्यास लोपे ईप्स इत्यस्य सनाद्य-न्ततया धातुत्वे धातुत्वाल्लटि तिपि सार्वधातुकत्वे शपि पररूपे ईप्सति, इति रूपम् ।

**प्रश्न ३. पित्सति, इत्यस्य सिद्धिः साधु कार्या**

उ०– पतितुमिच्छति, इत्यर्थे पत् धातोः सनि आर्धधातुकत्वे (तनि–पति–दरिद्रातिभ्यः सनो वेड् वाच्यः" इति पाक्षिके इटि पत् इ स द्वित्वेऽभ्यासादिकार्ये "सन्यतः" इतीत्वे पिपतिस इति जाते सनाद्यन्तत्वेन धातुत्वाल्लटि तिपि सार्वधातुकत्वे शपि पररूपे षत्वे पिपतिषति, इति रूपम् पक्षे पत् स द्वित्वेऽभ्यासत्वे सनिमी–मा–घु–रभ–लभ–शक–पत–पदामच इस्" इति अ च इसादेशेऽभ्यासलोपे स्कोरिति सलोपे पित्स, इत्यस्य धातुत्वाल्लडादिकार्ये पित्सति, इति रूपद्वयम् ।

## अभ्यासार्थं प्रश्नाः

(१) सनः प्रवृत्तिस्थलं निवृत्तिस्थलं च स्पष्टयत ।

(२) पिपठिषति, जुघुक्षति, सुष्वापयिषति, दिदरिद्रासति, तितरीषति, एतेषां सिद्धिपथं दर्शयत ।

(३) जिघांसति, चिकरिषति, दुद्यूषति, दिधिसति, धिप्सति, श्वा मुमूर्षति, मुमुक्षते, पिपविषते एषु प्रवर्तमानानि विशेषसूत्राणि तेषां कार्यञ्च सुस्पष्टं समुल्लिखत ।

(४) अधस्तनानां सूत्राणामर्था विलिख्यन्ताम्

(क) सन्यङोः ।

(ख) सनिग्रहगुहोश्च ।

(ग) पूर्ववत्सनः ।

(घ) च्छ्वोः शूडनुनासिके च ।

(ङ) तनोतेर्विभाषा ।

(५) अधस्तनं पद्यं सोदाहरणं व्याख्यात

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।

सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥

(६) कृ–गम्–रुद्–ऊर्णु– श्रि धातूनां सनि लटि उत्तमपुरुषस्यैकवचने संपत्स्यमानानि रूपाणि प्रक्रियाप्रदर्शनपुरःसरं साधु साधनीयानि ।

(७) विग्रहवाक्यानि विलिखत

(क) पिपठिषामः । (ख) अधिजिगांसते । (ग) बुभूषथ । (घ) अञ्जिजिषति ।

(ङ) मीमांसन्ते ।

(८) अधोऽङ्कितानां क्रियाणां स्थानेषु एकैव क्रिया स्थाप्या

(क) व्याघ्रो मृगं हन्तुमिच्छति ।

(ख) अहं वाराणसीं गन्तुमिच्छामि ।

(ग) असन्तुष्टा जना सदा रोदितुमिच्छन्ति ।

(घ) लज्जावती छात्रा समुचितमपि प्रश्नं प्रष्टुं नेच्छति ।

(ङ) सर्वे छात्राः परीक्षामुत्तर्तुमिच्छन्ति ।

(च) त्वं कं विषयं पठितुमिच्छसि ?

(९) अधस्तनवाक्यानि संशोधयत

(क) मूर्खा न पिपठिषन्ते ।

(ख) सज्जनाः सत्कार्यं चिकिर्सन्ति ।

(ग) वञ्चकाः स्वककृत्यमुर्णुनाविसन्ति ।

(घ) विष्णुप्रसादो हरिप्रसादस्य रुप्यकाणां शतं दिदिविसति ।

(ङ) वयं पशुपतिनाथं शिश्रइसामः ।

# अथ यङन्तप्रक्रिया

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ ३।१।२२**

पौनः पुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ ।

**गुणो यङलुकोः ७।४।८२**

अभ्यासस्य। ङिदन्तत्वादात्मनेपदम्। पुनः पुनरतिशयेन वा भवति –बोभूयते। बोभूयाञ्चक्र। अबोभूयिष्ट। धातोः किम् ? आर्धधातुकत्वं यथा स्यात्। ब्रुवो वचिरित्यादि। एकाचः किम् ? पुनः पुनर्जागर्ति। हलादेः किम्। भृशमीक्षते।

**नित्यं कौटिल्ये गतौ ३।१।२३**

गत्यर्थात्कौटिल्य एव यङ नतु क्रिया समभिहारे।

**दीर्घोऽकितः ७।४।८३**

अकितो दीर्घोऽभ्यासस्य यङ–यङलुकोः। कुटिलं व्रजति–वाव्रज्यते।

**यस्य हलः ६।४।४९**

हलः परस्य यस्य लोपः स्यादार्धधातुके। 'आदेः परस्य' 'अतोलोपः'। वाव्रजाञ्चक्रे। वाव्रजिता (१)।

**रीङृतः ७।४।२७**

अकृद्यकारे असार्वधातुक यकारे च्वौच परे ऋदन्ताङ्गस्य रीङादेशः॥ **डुकृञ् करणे** चेक्रीयते।

**रीगृदुपधस्य च ७।४।९०**

ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ यङलुकोः। वरीवृत्यते। वरीवृताञ्चक्रे। वरीवृतिता (२) 'क्षुभ्नादिषु च' नरीनृत्यते। जरीगृह्यते। (रीगृत्वत इति वाच्यम्) वरीवृश्च्यते परीपृच्छयते।

**लुप–सद–चर–जप–जभ–दह–दश–गृभ्यो भावगर्हायाम् ३।१।२४**

एभ्यो धात्वर्थ गर्हायामेव यङ। गर्हितं लुम्पति–लोलुप्यते। सासद्यते।

---

(१) व्रज धातोर्यङि द्वित्वादौ 'दीर्घोऽकितः' इत्यभ्यासदीर्घे वाव्रज्य इत्यस्मात् लुटि तासादाविटि 'यस्य हलः' इति यलोपः 'अतो लोपः' इत्यकारलोपः। वाव्रजिता।

(२) वृतु धातोर्यङि द्वित्वादौ, अभ्यासस्य रीगागमे वरीवृत्य' इत्यस्मात्तासादौ इटि यस्य हलः' इति यलोपे अलोपे वरीवृतिता, अलोपस्य स्थानिवत्वान्नोपधागुणः।

**चरफलोश्च ७।४।८७**

अनयोरभ्यासस्यातो नुक् यङ-यङलुकोः । नुगित्यनेनानुस्वारो लक्ष्यते । सच पदान्तवद्-वाच्यः । वा परान्तस्येति यथा स्यात् ॥

**उत्परस्यातः ७।४।८८**

चरफलोरभ्यासात्परस्यात उत्स्याद्यङ-यङलुकोः । हलिचेति दीर्घः । चञ्चूर्यते । चंचूर्यंते (१) । पम्फुल्यते, पंफुल्यते ॥

**जप-जभ-दह-दश-भञ्ज--पशां च ७।४।८६**

एषामभ्यासस्य नुक् यङ-यङलुकोः । गर्हितं जपति-जञ्जप्यते । इत्यादि ।

**ग्रो यङि ८।२।२०**

गिरतेरेफस्य लत्वं यङि । गर्हितं गिलति- जेगिल्यते (२) ।

(**सूचि सूत्रि मूत्र्यट्यर्त्यशर्णोतिभ्यो यङ् वाच्यः**) । सोसूच्यते । **अट पट गतौ** । अटाट्यते ।

**यङि च ७।४।३०**

अर्तेः संयोगादेश्च ऋदन्ताङ्गस्य गुणो यङि । यकार परस्य रेफस्य न द्वित्व निषेधः, अरार्यते इति भाष्योदाहरणात् । अरारिता । अशाश्यते ऊर्णोनूयते (३)॥

**सिचो यङि ८।३।११२**

सस्य षो न । निसेसिच्यते ।

**न कवतेर्यङि ७।४।६३**

अभ्यासस्य चुत्वं न । कोकूयते (४) । कौति कुवत्योस्तु-चोकूयते ॥

(**हन्तेर्हिसायां यङि घ्नीभावो वाच्यः**) जेघ्नीयते । हिंसायां किम्-

---

(१) चर् धातोर्यङि द्वित्वे नुकि 'उत्परस्यातः' इत्युत्वे हलिचेतिदीर्घेऽनुस्वारस्य विकल्पेन परसवर्णे ।

(२) गृधातोर्यङि 'ऋतइद् धातो रिति इत्वे रपरत्वे द्वित्वादावभ्यासस्य गुणो यङलुकोरिति गुणे 'ग्रोयङि' इति लत्वे रूपमिदम् ।

(३) ऊर्णुञ् धातोर्यङि नु शब्दस्य द्वित्वेऽहलादिशेषेऽभ्यासस्य गुणे 'अकृत्सार्वधातुकेति दीर्घः ।

(४) कुङ धातोः शब् विकरणाद् यङि द्वित्वेऽभ्यासस्य गुणे 'अकृत्सार्व' इति दीर्घे 'कुहोश्चुरिति चुत्वे प्राप्ते 'न कवतेर्यङि' इति चुत्व निषेधे ।

**नुगतोऽनुनासिकान्तस्य ७।४।८५**

अदन्ताभ्यासस्य नुक् यङ–यङलुकोः। जंघन्यते ।

**अयङ यि क्ङिति ७।४।२२**

शीङोऽयङादेशः स्याद् यादौ क्ङिति । शाशय्यते (१) ।

**स्वपि–स्यमि–व्येञां यङि ६।१।१९**

एषां संप्रसारणं स्याद् यङि । सोषुप्यते । सेसिम्यते । वेवीयते ।

**न वशः ६।१।२०**

वशो न संप्रसारणम् । वावश्यते ।

**चायः की ६।१।२१**

यङि । चेकीयते ।

**ई घ्राध्मोः ७।४।३१**

जेघ्रीयते । देध्मीयते ।

**नीग्–वञ्चु–स्रंसु–ध्वंसु–कस–पत–पद–स्कन्दाम् ७।४।८४**

एषामभ्यासस्य नीग् यङ–यङलुकोः । अकित इत्युक्तेर्नदीर्घः । वनीवच्यते (२)। सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते । चनीकस्यते । पनीपत्यते । पनीपद्यते । चनीस्कद्यते ।

**।। इति यङन्तप्रक्रिया ।।**

अभ्यासः

**प्रश्न १. वाव्रजिता, इत्यस्य साधुत्वप्रकारो दर्शनीयः**

उ०– कुटिलं व्रजिता, इति विग्रहेव्रज्धातोः "नित्यं कौटिल्येगतौ" नित्ये यङि, अनुबन्ध-लोपे व्रज् य "सन्यङोः" इति द्वित्वेऽभ्यासत्वे हलादिशेषे "दीर्घोऽकितः "इति अभ्यासदीर्घे

---

(१) शीङ स्वप्ने – इत्यस्माद् यङि परत्वादन्तरङ्गत्वाच्चाऽयङादेशे कृते द्वित्वे हला–दिशेषे 'दीर्घोऽकितः, इत्यभ्यासदीर्घे शाशय्यते ।

(२) वञ्चुधातोर्यङि अनिदितां..' इति नलोपे द्वित्वेऽभ्यासस्य नीगागमे रूपम् दीर्घो ऽकितः' इत्यत्राऽकित इत्युक्तेनभ्यासस्य दीर्घस्तदवयवस्य नीकः कित्वात् ।

वाव्रज्य इत्यस्य सनाद्यन्ततया धातुत्वाल्लुटि लस्य स्थाने यङो ङित्वादात्मनेपदसंज्ञके तादेशे-सार्वधातुकत्वे शपं प्रबाध्य तासि प्रत्यये आर्धधातुकत्वे इटि वाव्रज्य इ तास् त इत्यत्र आदेः परस्येति सूत्र सहकारेण "यस्य हलः" इति यकारलोपे "अतो लोपः" इत्यकारलोपे तस्यडादेशेऽनुबन्धलोपे डित्वाट्टिलोपे वाव्रजिता, इति रूपम् ।

**प्रश्न २. चञ्चूर्यते, इत्यस्य साधुत्वं वर्णयत**

उ०– गर्हितं चरति इति विग्रहे "लुप–सद–चर–जप–जभ–दह–दश–गृभ्योभावगर्हायाम्" इति चर् धातोर्गर्हायामेव यङि द्वित्वेऽभ्यासत्वे हलादिशेषे "चरफलोश्च" इति नुक्यनुबन्धलोपेऽनुस्वारे परसवर्णे हलिचेति दीर्घे चञ्चूर्य इत्यस्य सनाद्यन्ततया धातुत्वेन लटि लस्य यङो ङित्वादात्मनेपदसंज्ञके प्रथमपुरुषैकवचने तादेशे सार्वधातुकत्वे शपि पररूपे टेरेत्वे च चञ्चूर्यते ।

**प्रश्न ३. पनीपद्यते, इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ०– पद् धातोर्यङि पद्य द्वित्वेऽभ्यासत्वे हलादिशेषे "नीग्–वञ्चु–स्रंसु–ध्वंसु–भ्रंसु–कस-पत-पद–स्कन्दाम्" इति अभ्यासस्य नीगागमेऽनुबन्धलोपे कित्वादभ्यासदीर्घाभावे पनीपद्य इत्यस्य सनाद्यन्ततया धातुत्वेन लटि लस्यात्मनेपदसंज्ञके तादेशे टेरेत्वे च पनीपद्यते, इति रूपम् ।

## अभ्यासार्थं प्रश्नाः

(१) पौनः पुन्यार्थस्य अतिशयार्थस्य च यङः प्रवृत्तिस्थलं सम्यङ् निरूपयत ।

(२) **अबोभूयिष्ट, वाव्रजाञ्चक्रे, वरीवृत्यते, चञ्चूर्यते, अरारिता, शाशय्यते, वनीवच्यते एते प्रयोगाः प्रक्रियाप्रदर्शनपुरःसरं साधु साधनीयाः ।**

(३) **केवलमुत्तरयत**

(क) वाव्रज्यते अत्र अभ्यासदीर्घविधायि सूत्रं किम् ?

(ख) नरीनृत्यते इत्यत्र केन प्राप्तं णत्वं केन निषिध्यते ?

(ग) सासद्यते अस्य सिद्धौ कस्मिन्नर्थे केन यङ् विधीयते ?

(घ) निसेसिच्यते इत्यत्र केन प्राप्तं षत्वं केन निवारितम् ?

(ङ) वावश्यते अस्य साधनप्रक्रियायां केन प्राप्तं संप्रसारणं केन निषिद्धम् ?

(४) **सूत्राशयं स्पष्टीकुरुत**

(क) रीङृतः । (ख) उत्परस्यातः । (ग) चायः की । (घ) अयङ् यि क्ङिति । (ङ) ई घ्राध्मोः ।

(५) **निम्नाङ्कितानां क्रियापदानां विग्रहवाक्यानि विलिखत**

(क) वाव्रजिता । (ख) जरीगृह्यते । (ग) कोकूयते । (घ) ऊर्णोनूयते । (ङ) देध्मीयते ।

(६) अधोविङ्क्तानां क्रियाणां स्थानेषु एकैव क्रिया प्रयोज्या

(क) बाल सभायामपि भूमौ कुटिलं व्रजति ।

(ख) यस्य कस्यापि कुकृत्यं सज्जनहृदयं गर्हितं दहति।

(ग) सज्जनाः पौनःपुन्येन परोपकृतिं कुर्वन्ति ।

(घ) मार्जारा मूषिकान् भृशं घ्नन्ति ।

(ङ) आर्या सर्वस्मिन् शुभकर्मणि अतीव शङ्खं धमन्ति ।

(७) अधस्तनेषु प्रयोगेषु विशेषकार्यविधायकानां सूत्राणां कार्याणि दर्शयत

(क) वरिवृतिता। (ख) जेगिल्यते। (ग) मोमूत्र्यते। (घ) अशाश्यते। (ङ) वनीवच्यते।

(८) अशुद्धयः सोध्याः

(क) धर्मात्मानः परोपकारिणश्च बोभूयन्ति ।

(ख) वका मत्स्यान् जेगिल्यन्ती ।

(ग) यज्ञान्ते ब्राह्मणा भक्तान् अभिमन्त्रितेन जलेन निषेषिच्यन्ते।

(घ) स्पष्टवादिता नराणां स्वच्छं हृदयं सोसुच्यते ।

(ङ) पापिनोऽन्त्येऽवश्यमेव पनिपत्यन्ति ।

# अथ यङ्लुगन्तप्रक्रिया

**यङोऽचि च २।४।७४**

यङोऽचि प्रत्यये लुक्स्यात्। चकारात्तं विनापि क्वचित्। अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति। ततः प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वम्। अभ्यासकार्यम्। धातुत्वाल्लडादयः। 'शेषात्कर्तरि परस्मैपदम्।" चर्करीतं चेत्यदादौ पाठाच्छपो लुक्।

**यङो वा ७।३।९४**

यङन्तस्य हलादेः पितः सार्वधातुकस्य ईड् वा स्यात्। भुसुवोरिति गुणनिषेधो यङलुकि भाषायां न। 'बोभूतु तेतिक्ते' इति छन्दसि निपातनात्। बोभवीति, बोभोति। बोभूतः। बोभुवति। बोभवीषि, बोभोषि। बोभूथः। बोभूथ। बोभवीमि, बोभोमि। बोभूवः। बोभूमः। बोभवाञ्चकार। बोभवांबभूव। बोभवामास। बोभविता। बोभविष्यति। बोभवीतु, बोभोतु। बोभूतात्। बोभूताम्। बोभुवतु। बोभूहि। बोभवानि। अबोभवीत्, अबोभोत्। अबोभूताम्। अबोभवुः। बोभूयात्। बोभूयाताम्। बोभूयुः। बोभूयात्। बोभूयास्ताम्। गातिस्थेति सिचो लुक्। यङोवितीट् पक्षे गुणं बाधित्वा नित्यत्वाद् वुक्। अबोभूवीत्, अबोभोत्। अबोभूताम्। अबोभूवुः। अबोभविष्यत्। जङ्गमीति, जङ्गन्ति। अनुदात्तेत्यनुनासिकलोपः। जङ्गतः। जङ्ग्मति। 'म्वोश्च।' जङ्गन्वः।

**शितपा शपानुबन्धेन (१) निर्दिष्टं यद् गणेन च।**
**यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङलुकि ॥१॥**

इति वचनान्न इण्निषेधः। जङ्गमिता। अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक्। जङ्गहि 'मोनो धातोः।' अजङ्गन्। अजङ्गमीत्। अनुबन्धनिर्देशान्न च्लेरङ। अजङ्गमीत्।

---

(१) गमेरनिट्त्वात् 'प्रकृतिग्रहणे यङलुगन्तस्यापि ग्रहणात्' यङलुगन्तस्यापि– 'एकाच उपदेशे' इति इण् निषेधः स्यात्, तथा च कथं जङ्गमितेत्यत आह– शितपा शपेति। शितपा निर्दिष्टं यङलुकि न यथा— 'हन्तेर्जः' इति शितपानिर्देशाज्जादेशो न 'जङ्गहि' इति। शपा निर्दिष्टं यथा भरेति। तेन बिभर्तेः, भरतेः 'यङ लुगन्तात्सनि बर्भरिषतीत्यत्र 'सनीबन्तर्ध' इतीड्विकल्पो न किन्तुनित्यमेवेट्, एकाच इति निषेधाप्रवृत्तेः। यच्चानुबन्धेन निर्दिष्टं तद् न यङलुकि यथा– 'अजङ्गमीत्' इत्यत्र लृकारानुबन्ध निर्दिष्टत्वाच्लेरङ न। गणनिर्दिष्टञ्च न यथा— 'नवृद्भ्यश्चतुर्भ्यः' इति, इण्निषेधो न। वर्वर्तिष्यति यत्रैकाज्ग्रहणं तदपि यङलुकि न, यथा— जङ्गमिता, इत्यत्रैव, एकाच उपदेशे इतीण निषेधो न, तेन सर्वेऽपि, अनिट्का धातवो यङलुकि सेट्का भवन्ति।

## रुग्रिकौ च लुकि ७।४।९१

ऋदुपधस्य धातोरभ्यासस्य रुक् रिक् रीक् एते स्युर्यङलुकि ॥

## ऋतश्च ७।४।९२

ऋदन्त धातोरपि तथा। वर्वृतीति, वरिवृतीति, वरीवृतीति, वर्वर्ति, वरिवर्ति, वरीवर्ति। वर्वृतः ३। वर्वृतति ३। ववर्तामास ३। वर्वर्तिता ३। गणनिर्दिष्टत्वान्नवृद्भ्यश्चतुर्भ्यः, इति न। वर्वर्तिष्यति ३। अवर्वृतीत् ३। अवर्वर्त् ३। सिपिदश्चेतिरुत्वपक्षे रोरि। अवर्वाः ३ (१)। गणनिर्दिष्टत्वादङ न (२)। अवर्वर्तीत् ३। चर्करीति, (३) चरिकरीति, चरीकरीति। चर्कर्ति, चरिकर्ति, चरीकर्ति। चर्कृतः ३। चर्क्रति ३। चर्कराञ्चकार ३। चर्करिता ३। अचर्करीत् ३। अचर्कः ३ (४)। चर्क्रियात् ३। आशिषिरिङ। चर्क्रियात् ३। अचर्कारीत् ३ ऋतश्चेति तपरत्वान्नेह। चार्कर्ति (५) चाकरीति। चाकीर्तः (६)। चाकीर्हि। चाकराणि। अचाकरीत्। अचाकः। अचाकीर्ताम्। अचाकरुः। अचाकारीत्। अचाकारीष्टाम्। तातरीति, तातर्ति॥ इत्यादि।

## ॥ इति यङलुगन्ताः ॥

### अभ्यासः

**प्रश्न १. बोभुवति, इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ०– पुनः पुनरतिशयेन वा भवन्ति, इति विग्रहे भूधातोर्यङि यङो लुकि प्रत्ययलक्षणतया द्वित्वेऽभ्यासत्वे जश्त्वे "गुणो यङलुकोः" इति गुणे बोभू, इत्यस्य सनाद्यन्तत्वेन धातुत्वा लटि लस्य शेषात्कर्तरिपरस्मैपदम्" इति परस्मैपदसंज्ञके झि प्रत्ययादेशे सार्वधातुकत्वे शपि चर्करीतं चेत्यदादौ पाठाच्छपो लुकि अभ्यस्ततया झेरन्तादेशं बाधित्वा "अदभ्यस्तात्" इति अतादेशे, उवङि बोभुवति, इति रूपम्।

---

(१) यङ लुगन्तस्य वृतेर्लङि सिपि रूपमिदम्।

(२) पुषादि द्युतादीति सूत्रे गणनिर्दिष्टत्वाद् वृतेश्चद्युतादित्वाच्च्लेरङ नेत्यर्थः।

(३) कृधातोर्यङलुकि लटस्तिपीट्पक्षे द्वित्वादावभ्यासस्य रुगागमे चर्करीति इडभावपक्षे चर्कर्ति। झौ चर्क्रति 'अदभ्यस्ताद्' इत्यद् यण।

(४) लङि–तिपि रुगागमेगुणे इडभावे–अचर्कर्त्, इत्यत्र हल्ङ्यादिलोपे रेफस्य विसर्गः– अचर्कः।

(५) कृ विक्षेपे–इत्यस्माद् यङलुकि लटस्तिपीडभावे द्वित्वादावभ्यासदीर्घे चार्कर्ति इतिरुपम्। दीर्घत्वान्न रुगादयः।

(६) तसः सार्वधातुकमपित्' इति ङित्वाद् गुणाभावे–ऋत इत्वं रपरत्वं हलिचेति दीर्घः।

**प्रश्न २. अजंगमीत्, इत्यस्य साधुत्वप्रकारो लेख्यः**

उ०– पुनः पुनरतिशयेन वा अगमत्, इति विग्रहे गम् धातोर्यङि यङो लुकि प्रत्यय लक्षणतया द्वित्वेऽभ्यासत्वे हलादिशेषे कुहोश्चुरितिश्चुत्वे ज गम् इति जाते "नुगतोऽनुनासिकान्तस्येति नुक्यनुबन्धलोपेऽनुस्वारे परसवर्णे च जङ्गम् इति जाते सनाद्यन्तत्वेन धातुत्वाल्लुङि श्रटि लस्य तिपि सार्वधातुकत्वे शपि प्राप्ते तं प्रबाध्य च्लौ च्लेः सिचि आर्धधातुकत्वे इटि तेरिकारलोपेऽपृक्तत्वेऽपृक्तसंज्ञात्मके ईटि सिचोलोपे दीर्घे "अतोहलादेरिति प्राप्तायां वृद्धिः ह्म्यन्तेति निषेधे अजङ्गमीत्, श्तिबादीनां निर्देशानां यङ लुकि प्रवृत्तिविरहात्, इडागम निषेधश्च्लेरङादेशश्च न शङ्कनीयः ।

**प्रश्न ३. वर्वृतीति, इत्यस्य प्रक्रिया दर्शनीया**

उ०– वृत् धातोर्यङि यङोऽचि चेति यङोलुकि प्रत्ययलक्षणतया वृत् इत्यस्य द्वित्वेऽभ्यासत्वे उरदिति अत्वे रपरत्वे हलादिशेषे व वृत् इति स्थिते रुग्रिकौ च लुकि इति रुगागमेऽनुबन्धलोपे वर्वृत् इत्यस्य सनाद्यन्तत्वेन धातुत्वाल्लटि लस्य शेषात्कर्तरीति परस्मैपदसंज्ञके तिपि सार्वधातुकत्वे शपि चर्करीतं चेत्यदादौ पाठाच्छपो लुकि यङो वा" इतिपाक्षिके ईटि प्राप्तस्य लघूपधगुणस्य "नाभ्यस्तस्याचि पितिसार्वधातुके" इति निषेधे वर्वृतीति, इडभावे गुणे वर्वर्ति, रिगागमे वरिवृतीति, रीगागमे वरीवृतीति, वरिवर्ति, वरीवर्ति, इति षड्रूपाणि ।

## अभ्यासार्थं प्रश्नाः

(१) **बोभवीति, अबोभूवीत्, जङ्गमिता, वर्वृतीति, अचर्कः, चाकर्हि, तार्तति, एतेषां निष्पत्तिप्रक्रियां दर्शयत ।**

(२) **निम्नाङ्कितानां सूत्राणां प्रवृत्तिस्थलं स्वकल्पितोदाहरणैः स्पष्टीक्रियताम्**

(क) यङो वा ।

(ख) रुग्रिकौ च लुकि ।

(ग) ऋतश्च ।

(३) श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ।।
अस्याः सूत्रकारिकायाः कथनं स्पष्टीकुरुत ।

(४) **अधोनिर्दिष्टानि क्रियापदानि अनुसृत्य तेषां रूपाणि विलिखत**

(क) बोभवीति। (ख) जङ्गमीति। (ग) ववर्तामास। (घ) अचर्करीत्। (ङ) तार्तति

(५) **वर्वर्ति, चर्कर्ति, तार्तति, बोभवीति एतानि क्रियापदानि प्रयुज्य पृथक् चत्वारि वाक्यानि निर्मात ।**

# अथ नामधातुप्रक्रिया

**सुप आत्मनः क्यच् ३।१।८**

इषिकर्मण एषितुरात्मसम्बन्धिनः सुबन्तादिच्छायामर्थे क्यज्वा ।

**सुपो धातुप्रातिपदिकयोः २।४।७१**

एतयोरवयवस्य सुपो लुक् स्यात् ।।

**क्यचि च ७।४।३३**

अवर्णस्य ईत्स्यात्। आत्मन पुत्रमिच्छति पुत्रीयति (१)। (**मान्तप्रकृतिकसुबन्ता- दव्ययाच्च क्यज्न** । किमिच्छति । इदमिच्छति । स्वरिच्छति ।

**अशनायोदन्य–धनाया बुभुक्षा– पिपासा–गर्द्धेषु ७।४।३४**

एते क्यजन्ता निपात्यन्ते । अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् ? अशनीयति । उदकीयति । धनीयति ।

**अश्व–क्षीर वृष लवणानामात्मप्रीतौ क्यचि ७।१।५१**

एषां क्यच्यसुक् । (**अश्ववृषयोर्मैथुनेच्छायाम्**) । अश्वस्यति बडवा वृषस्यति गौः । (**क्षीरलवणयोर्लालसायाम्**) क्षीरस्यति बालः । लवणस्यत्युष्ट्रः । (**सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ**) । दधिस्यति । दध्यस्यति ।

**नः क्ये १।४।१५**

क्यचि क्यङि च नान्तमेवपदं नान्यत् । नलोपः । राजीयति । नान्तमेवेति किम् ? वाच्यति (२) । 'हलि च' गीर्यति (३) । पूर्यति । धातोरित्येव तेनेह न । दिवमिच्छति दिव्यति ।

**क्यस्य विभाषा ६।४।५०**

हलः परयोः क्यच्क्यङोर्लोपो वाऽऽर्धधातुके । 'आदेः परस्य' (४) । 'अतो लोपः' । तस्य स्थानिवद्भावान्नोपधाया गुणः । समिधिता समिध्यिता ।

---

(१) पुत्र+अम्+य, 'सनाद्यन्ता धातवः' इति धातुत्वम्, (सुपो लुक् लट्, तिप्, शप्, पुत्र+य+अ+ति, अकारस्य (पुत्रशब्दस्थस्य ईत्वम्, पररूपम्,) (यकारस्थाऽकारस्य) 'अतो गुणे' इत्यनेन पुत्रीयति ।

(२) अन्यथाऽत्र चोः कुरिति कुत्वं 'झलां जशोऽन्ते' इति जश्त्वं च स्यात् ।

(३) गिरमात्मन इच्छतीत्यर्थे क्यचि हलि चेत्युपधादीर्घे गीर्यति ।

(४) इति 'य्' मात्रस्य लोपः, ततोऽवशिष्टस्य 'अ' इत्यस्य 'अतो लोपः' इत्यनेन लोपः ।

**काम्यच्च ३।१।९**

उक्तविषये काम्यच् । पुत्रमात्मन इच्छति पुत्रकाम्यति । पुत्रकाम्यिता ।

**उपमानादाचारे ३।१।१०**

उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् । पुत्रमिवाचरति पुत्रीयतिच्छात्रम् । विष्णूयति द्विजम् । (सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः) । 'अतो गुणे' । कृष्ण इवाचरति कृष्णति स्व इवाचरति स्वति । सस्वौ ।

**अनुनासिकस्य क्वि झलोः क्ङिति ६।४।१५**

अनुनासिकान्तस्योपधाया दीर्घः क्वौ झलादौ क्ङिति च । इदमिवाऽऽचरति इदामति । राजेवाचरति राजानति । पन्था इवाचरति पथीनति । मथीनति । इन्हिन्निति नोपधा दीर्घः (इत्यपरे) पथेनति (१) । मथेनति

**कर्तुः क्यङ सलोपश्च ३।१।११**

उपमानात्कर्तुः सुवन्तादाचारेऽर्थे क्यङ वा सान्तस्य कर्तृवाचकस्य लोपो वा । क्यङ वेत्युक्तेः पक्षे वाक्यम् । (संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः) इति क्यङसलोपयोः सहैव प्रवृत्तिः । लोपश्च व्यवस्थितः । (ओजसोऽप्सरसो नित्यमितरेषां विभाषया) कृष्ण इवाचरति कृष्णायते । ओजायते । अप्सरायते । यशायते, यशस्यते । विद्वायते, विद्वस्यते । (**आचारेऽवगल्भ-क्लीव–होडेभ्य क्विब्वा वक्तव्यः**) वा ग्रहणाद् वाक्यमपि । अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते । तेन तङ । अवगल्भते । क्लीबते । होडते । भूतपूर्वादप्यनेकाच आम् (२) । एतद्वार्तिकारम्भसामर्थ्यात् । अवगल्भाञ्चक्रे । क्लीबाञ्चक्रे । होडाञ्चक्रे । उपसर्ग समानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते । तेन गल्भ शब्दात् प्राक्, अट् । अवागल्भत । अवागल्भिष्ट ।

**लोहितादिडाज्भ्यः क्यष् ३।१।१३**

**वा क्यषः १।३।९०**

क्यषन्तात्परस्मैपदं वा । अलोहितो लोहितो भवति– लोहितायति लोहितायते । ननूच्चारणसामर्थ्यात् काम्यच इव क्यषोऽपि ककारः कुतो न श्रूयते, तस्य भाष्ये प्रत्याख्यानात् (३) । पटापटायति,

---

(१) अन्तरङ्गत्वाद्दीर्घस्ततो लघूपधत्वाऽभावान्न गुणः, पथीनति ।

(२) अन्त्याऽकारस्येत्वेन लुप्तत्वात्, क्विपि धातूनामेकाच्त्वेन कास्यनेकाच इत्यस्याऽप्रवृत्तेः ।

(३) उच्चारणसामर्थ्याद् यथा काम्यच्प्रत्ययस्य ककारो न लुप्यते तथा क्यषोऽपि ककारो न लुप्यते, किन्तु श्रूयते तत्राहतस्य भाष्येति । तस्य = क्यषः ककारस्य भाष्ये प्रत्याख्यानात् यदि ककारश्रवणमिष्टमभविष्यत्तर्हि ककारं किमिति प्रत्याख्यास्यद्भाष्यकारः ।

पटपटायत (१) ।

**कष्टाय क्रमणे ३।१।१४**

चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ । कष्टाय क्रमते– कष्टायते । पापं कर्तुमुत्सते, इत्यर्थः । (**सत्र–कक्ष–कष्ट–कृच्छ्–गहनेभ्यः कण्वचिकीर्षायाम्**) । कण्वं=पापं चिकीर्षति । सत्रायते । कक्षायते ।

**कर्मणो रोमन्थ–तपोभ्यां वर्ति-चरोः ३।१।१५**

कर्मीभूताभ्यां रोमन्थ–तपोभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ स्यात् । रोमन्थं वर्तयति =रोमन्थायते । (**हनुचलन इति वाच्यम्**) चर्वितस्याकृष्य पुनश्चर्वणमित्यर्थः ।
नेह–कीटो रोमन्थं वर्तयति । (**तपसः परस्मैपदं च**) तपश्चरति–तपस्यति ।

**बाष्पोष्मभ्यामुद्वमने ३।१।१६**

बाष्प मुद्वमति=बाष्पायते । ऊष्मायते । (**फेनाच्चेति वक्तव्यम्**) फेनायते ।

**शब्द वैर-कलहाभ्र-कण्व-मेघेभ्यः करणे ३।१।१७**

एभ्यः कर्मभ्यः करोत्यर्थे क्यङ । शब्दं करोति–शब्दायते । (**सुदिनदुर्दिननीहारेभ्यश्च**) सुदिनायते । दुर्दिनायते । नीहारायते (**प्रातिपदिकाद्धात्वर्थेबहुलमिष्टवच्च**) प्रातिपदिकाद्धात्वर्थे णिच्स्यात् 'इष्ठे यथा प्रातिपदिकस्य पुंवद्भाव–रभाव–टिलोप–विन्मतुब्लोप–यणादिलोप–प्रस्थस्फाद्यादेश भसंज्ञास्तद्वण्णावपि स्युः।पटुमाचष्टे=पटयति । परत्वाद् वृद्धौ सत्यां टिलोपः । अपीपटत् (२) । णौ चङीत्यत्र भाष्ये तु वृद्धेर्लोपोबलीयानिति स्थितम् (३) । अपपटत् ।

**पुच्छ-भाण्ड-चीवराण्णिङ ३।१।२०**

(**पुच्छादुदसने व्यसने पर्यसने च ।**) विविधं विरुद्धं चोत्क्षेपणं = व्यसनं । उत्पुच्छयते । परिपुच्छयते (**भाण्डात्समाचयने**) संभाण्डयते । समभाण्डयत । (**चीवरादर्जने परिधाने च**) संचीवरयते भिक्षुः ।

---

(१) पटच्छब्दाद् डाचि 'डाचि विवक्षिते द्वे बहुल' मिति द्वित्वे 'नित्यमाम्रेडिते डाची' ति पूर्वतकारस्य पररूपे डित्वाट्टिलोपे च पटपटाशब्दाड्डाजन्तात्क्यषि रूपमिदम् ।

(२) पटुशब्दण्णिचि 'अचो ञ्णिति' इति वृद्धिरपि प्राप्ता–इष्ठवद् भावाद्, टिलोपोऽपि, तत्र परत्वात् वृद्धौ सत्यां टेः = औकारस्य लोपः, तेन नायमग्लोपी तस्माद्भवति सन्वद्भावो दीर्घश्च (लुङि) अपीपटत् ।

(३) भाष्ये तु वृद्धेर्लोपोबलीया नित्युक्तत्वाद् णौ वृद्धिं बाधित्वा टेः = उकारस्यैव लोपः, तेनायं भवत्यग्लोपी, अतो न सन्वद्भावदीर्घौ, अपपटत् ।

**मुण्ड-मिश्र-श्लक्ष्ण-लवण-व्रत-वस्त्र-हल-कल-कृत-तूस्तेभ्यो णिच् ३।१।२१**

क्रन्यर्थे। मुण्डं करोति=मुण्डयति। (व्रताद्भोजन तन्निवृत्त्योः) पयः शूद्रान्नं वा व्रतयति। (वस्त्रात्समाच्छादने) संवस्त्रयति। (हल्यादिभ्योग्रहणे) हलिकल्योरदन्तत्वं च निपात्यते (हलिं कलिं वा गृह्णाति–हलयति (१), कलयति। महद्धलं = हलिः। कृतं गृह्णाति–कृतयति। तूस्तानि विहन्ति वितूस्तयति। तूस्तं = केशा इत्येके। जटीभूताः केशा इत्यन्ये। पापमित्य परे। (सत्यार्थवेदानामापुग्वक्तव्यः) सत्यापयति। अर्थापयति। वेदापयति। पाशं विमुञ्चति–विपाशयति। रूपं पश्यति–रूपयति। वीणयोपगायति–उपवीणयति। तूलेनानूकुष्णाति–अनुतूलयति। तृणाग्रं तूलेनानुघट्टयतीत्यर्थः। श्लोकैरुपस्तौति–उपश्लोकयति। सेनायभियाति–अभिषणयति। लोमान्यनुमार्ष्टि–अनुलोमयति। **त्वच संवरणे**। पचाद्यच्। त्वचं गृह्णाति–त्वचयति। वर्मणा संनह्यति– संवर्मयति। वर्णं गृह्णाति–वर्णयति। चूर्णैरवध्वंसते–अवचूर्णयति।

## ॥ इति नामधातुप्रक्रिया ॥

### अभ्यासः

**प्रश्न १. वाच्यति, इत्यस्य साधुत्वं दर्शयत**

उ०– राजीयति, इत्यत्र अन्तर्वर्तिनीं विभक्तिमादायैव पदत्वान्नलोपे सिद्धे "नः क्ये" इति सूत्रस्य, "सिद्धे सति आरभ्यमाणो विधिर्नियमाय कल्पते" इति नियामकत्वात् नान्तस्यैव पदत्वम्, अन्यत्र पदत्वाभावः, तेन आत्मनोवाचमिच्छतीत्यर्थे "सुप आत्मनः क्यच्" इति क्यच्यनुबन्धलोपे सनाद्यन्तत्वेन धातुत्वात् 'सुपो धातुप्रातिपदिकयोरिति सुपो लुकि लटि तिपि शपि पररूपे वाच्यति, इति रूपम्, अन्तर्वर्तिनीं विभक्तिमादाय पदत्वाभावात् चोकुरिति कुत्वाभावः। वचिस्वपीति संप्रसारणन्तु न धातोः कार्यमुच्यमानं धातुविहितप्रत्यये एव इति नियमात्।

**प्रश्न २. पुत्रकाम्यिता, इत्यस्य साधुत्वं वर्णयत**

उ०– आत्मनः पुत्रमिषिता, इति विग्रहे पुत्र अम् सुवन्तात् "काम्यच्च" इति काम्यचि अनुबन्धलोपे सनाद्यन्तत्वेन धातुत्वात्सुपो लुकि धातुत्वाल्लुटि लस्य तिपि तिपोडात्वेऽनुबन्धलोपे तासि तासः आर्धधातुकतया इटि "अतो लोपः" इति काम्यचोऽकारस्य लोपे पुत्रकाम्यिता, इति रूपम्।

**प्रश्न ३. सस्वौ, इति प्रयोगं साधु साधयत**

उ०– स्व इव आचचार, इत्यर्थे स्वशब्दात् 'सर्वं प्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इति क्विपि सर्वापहारलोपे सनाद्यन्तत्वेनधातुत्वाल्लिटि लस्य तिपि तिपो णलि द्वित्वेऽभ्यासत्वेऽभ्या-

(१) हलिकल्योरदन्तत्व निपातनात् वृद्धेः पूर्वं पश्चाद्वा टिलोपे (अलोपे–आलोपे वा) अगेव लुप्यत इति अग्लोपित्वान्न सन्वद्भावदीर्घौ अजहलत्।

सलोपे च स स्व अ इति स्थिते अचो ञ्णितीति वृद्धौ सस्वा अ इति जाते "आत औ णल" इति औत्वे वृद्धौ सस्वौ, इति रूपम् ।

## अभ्यासार्थं प्रश्नाः

(१) पुत्रीयति, राजीयति, समिधिता, पथीनति, विद्वायते, लोहितायते, तपस्यति, वाष्पायते, अपीपटत्, विपुच्छयते, हलयति, सत्यापयति एते साधु साधनीयाः ।

(२) निम्नाङ्कितप्रयोगेषु विशिष्टकार्यविधायकानि वार्तिकानि उल्लिख्य तेषां विशेषकार्यं च दर्शयत ।

(क) दधिस्यति । (ख) अश्वस्यति वडवा । (ग) स्वति । (घ) ओजायते । (ङ) सत्रायते । (च) तपस्यति । (छ) संचीवरयते भिक्षुः (ज) । शूद्रान्नं वृतयति ।

(३) अधोऽङ्कितेषु विशेषकार्यकारिणां सूत्राणामुल्लेखं विधाय तेषां कार्याणि च ब्रूत

(क) पुत्रकाम्यति । (ख) पुत्रीयति । (ग) इदामति । (घ) कष्टायते । (ङ) रोमन्थायते । (च) शब्दायते । (छ) मुण्डयति ।

(४) क्रियापदस्य अशुद्धिं शोधयत

(क) अपुत्रिणः सदा पुत्रीयन्ते ।

(ख) सर्वे आर्या द्विजान् सर्वान् विष्णुयन्ते स्तुवन्ति च ।

(ग) अप्सरोयन्ति युवतयः ।

(घ) धीमन्तो विद्वष्येते ।

(ङ) हिमनद्यः शीते फेनायन्ति ।

(५) अधोनिर्दिष्टान् प्रयोगान् प्रयुज्य पृथक् पृथग् वाक्यानि विरचयत

(क) धनायति । (ख) विष्णूयति । (ग) राजानति । (घ) तपस्यति (ङ) संवस्त्रयति ।

(६) कण्डूयति, कण्डूयते अनयोः साधनप्रक्रियां सम्यग् दर्शयत ।

(७) कण्ड्वादीनां धातुत्वं प्रातिपदिकत्वं च प्रतिपादयत ।

# अथ कण्ड्वादिः

**कण्ड्वादिभ्यो यक् ३।१।२७**

एभ्यो धातुभ्यो(१) नित्यं यक् स्यात् स्वार्थे ।। **कण्डूञ् गात्र विघर्षणे**(२)। कण्डूयति। कण्डूयते । इत्यादि ।

# अथात्मनेपदप्रक्रिया

**कर्तरि कर्मव्यतिहारे १।३।१४**

क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् । व्यतीलुनीते =अन्यस्य योग्यं लवनं करोतीत्यर्थः।

**न गति हिंसार्थेभ्यः(३)१।३।१५**

व्यतिगच्छन्ति । व्यतिघ्नन्ति । (हरतेरप्रतिषेधः) । संहरन्ते राजानः ।

**इतरेतरान्योन्योपपदाच्च । १।३।१६**

(**परस्परोपपदाच्चेति वक्तव्यम्**) । इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति ।

**नेर्विशः १।३।१७**

निविशते ।

**परिव्यवेभ्यः क्रियः १।३।१८**

परिक्रीणीते । विक्रीणीते । अवक्रीणीते ।

**विपराभ्यां जेः १।३।१९**

विजयते । पराजयते ।

---

(१) धातुग्रहणं प्रातिपदिकनिवृत्यर्थम्– द्विविधा हि कण्ड्वादयो धातवः प्रातिपदिकानि च, तत्र-धातुभ्य एव स्यादित्यर्थः । यकः कित्वेन धातवः (कण्ड्वादयः) इति ज्ञायते। कण्डूञ्– इति दीर्घपाठेन प्रातिपदिकान्यपीति, यदि तु धातव एव स्युस्तर्हि ह्रस्वान्ते पठितेऽपि यकि परे 'अकृत्सार्वधातुकयोः' इति दीर्घेण 'कण्डूयते' इति सिद्धेः किं दीर्घ पाठेन ।

(२) ञित्वादुभयपदी ।

(३) गत्यर्थेभ्यो हिंसार्थेभ्यश्च धातुभ्यः कर्मव्यतिहारे पूर्वसूत्रप्राप्तमात्मनेपदन्न स्यादित्यर्थः ।

### क्रीडोऽनु-सं-परिभ्यश्च १।३।२१

चादाङः । अनुक्रीडते । संक्रीडते । आक्रीडते । (**समोऽकूजने**) संक्रीडते । कूजने तु संक्रीडति चक्रम् । (**आगमेः क्षमायाम्**) ण्यन्तस्येदं ग्रहणम् । आगमयस्व तावत् = मा त्वरिष्ठा इत्यर्थः । (**शिक्षेर्जिज्ञासायाम्**) (१) । धनुषि शिक्षते = धनुर्विषयज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ।

### वृत्ति-सर्ग-तायनेषु क्रमः १।३।३८

वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिः । सर्गः = उत्साहः । अध्ययनाय क्रमते । तायनं = वृद्धिः । क्रमन्तेऽस्मिञ्छास्त्राणि = स्फीतानि भवन्तीत्यर्थः ।

### आङ उद्गमने १।३।४०

आक्रमते सूर्यः (**ज्योतिरुद्गमन इति वाच्यम्**) नेह– आक्रामति धूमो (२) हर्म्यतलात् ।

### वेः पादविहरणे १।३।४१

साधु विक्रमते वाजी ।

### प्रोपाभ्यां समर्थाभ्याम् (३) १।३।४२

प्रारम्भेऽनयोस्तुल्यार्थता । प्रक्रमते । उपक्रमते । समर्थाभ्यां किम् ? प्रक्रामति = गच्छतीत्यर्थः । उपक्रामति = आगच्छतीत्यर्थः ।

### अनुपसर्गाद्वा १।३।४३

क्रामति । क्रमते ।

### अपह्नवे ज्ञः १।३।४४

शतमपजानीते = अपलपतीत्यर्थः ।

### अकर्मकाच्च १।३।४५

सर्पिषो जानीते = सर्पिषोपायेनः प्रवर्तत इत्यर्थः ।

---

(१) शकेः सन्नन्तस्य शिक्षेत्यनेन ग्रहणं, न तु शिक्षविद्योपादाने इत्यस्य । सनि मीमेतीस् अभ्यासलोपः – शिक्षते ।

(२) ज्योतिरुद्गमने इत्युक्तत्वान्नेहाऽऽत्मनेपदम्, नहि धूमो ज्योतिः ।

(३) समोऽर्थो ययो स्तौ समर्थौ (शकन्ध्वादित्वात्पररूपम्) तुल्यार्थावित्यर्थः । प्रारम्भेऽनयोस्तुल्यार्थता, तेन प्रारम्भार्थाभ्यां प्रोपाभ्यां क्रमतेरात्मनेपदमित्यर्थः ।

**समवप्रविभ्यः स्थः १।३।२२**

संतिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते । ( **आङः प्रतिज्ञायामुपसंख्यानम्** ) शब्दं नित्यमातिष्ठते ।

**प्रकाशन(१)–स्थेयाख्ययोश्च १।३।२३**

गोपी कृष्णाय तिष्ठते = आशयं प्रकाशयतीत्यर्थः। 'संशय्य कर्णादिषु तिष्ठते यः'= कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः ।

**उदोऽनूर्ध्वकर्मणि १।३।२४**

मुक्तावुत्तिष्ठते । अनूर्ध्वेति किम्? पीठादुत्तिष्ठति ।

**उपान्मन्त्रकरणे १।३।२५**

आग्नेय्याऽऽग्नीध्रमुपतिष्ठते। मन्त्रकरणे किम्? भर्तारमुपतिष्ठति यौवनेन। (**उपाद्देवपूजा–संगतिकरण–मित्रकरण–पथिष्विति वाच्यम्**) आदित्यमुपतिष्ठते(२)। गङ्गा यमुना–मुपतिष्ठते (३)। रथिकानुपतिष्ठते=मित्रीकरोतीत्यर्थः। पन्थाः स्रुघ्नमुपतिष्ठते=प्राप्नोति, इत्यर्थः। (**वा लिप्सायाम्**)। भिक्षुकः प्रभुमुपतिष्ठति, उपतिष्ठते वा ।

**उद्विभ्यां तपः १।३।२७**

अकर्मकादित्येव। उत्तपते, वितपते=दीप्यते, इत्यर्थः। (**स्वाङ्गकर्मकाच्चेति वक्तव्यम्**।(४)

**आङो यमहनः(५) १।३।२८**

आयच्छते। आहते। अकर्मकात्स्वाङ्गकर्मकाद्वित्येव। नेह–परस्य शिर आहन्ति ।

**आत्मनेपदेष्वन्यतरस्याम् २।४।४४**

हनो वधादेशो वा लुङि। आवधिष्ट, आवधिषाताम्, आवधिषत ।

**हनः सिच् १।२।१४**

कित्। अनुनासिकलोपः। आहत। आहसाताम्। आहसत ।

---

(१) प्रकाशनं स्वाभिप्रायाविष्करणम्। स्थेयाख्या=विवाद निर्णेतुरभिधानम्। प्रकाशनाख्यायां स्थेयाख्यायाञ्च वर्तमानात्स्थाधातोरात्मनेपदमित्यर्थः ।

(२) स्तुत्यादिभिः पूजयतीत्यर्थः ।

(३) उपश्लिष्यतीत्यर्थः ।

(४) चकारेणाऽकर्मकस्यापि सङ्ग्रहः ।

(५) आङ पूर्वकाद् यम् धातोर्हन्तेश्चात्मनेपदमित्यर्थः ।

**यमो गन्धने १।२।१५**

सिच् कित्। गन्धनं=सूचनं=परदोषाविष्करणम्। उदायत (१)। गन्धने किम्? उदायंस्त पादम्=आकृष्टवानित्यर्थः।

**समोगम्यृच्छिभ्याम् १।३।२९**

अकर्मकाभ्यामित्येव। संगच्छते।

**वा गमः १।२।१३**

गमः परौ झलादी लिङ् सिचौ वा कितौ स्तः। संगसीष्ट, संगंसीष्ट। समगत, समगंस्त। समृच्छते। अकर्मकाभ्यां किम्? ग्रामं संगच्छति। (**विदिप्रच्छि-स्वरतीनामुपसंख्यानम्**) वेत्तेरेव ग्रहणम्। सवित्ते। संविदाते।

**वेत्तेर्विभाषा ७।१।७**

वेत्तेः परस्य झादेशस्यातो रुडागमो वा। संविद्रते, संविदते। संपच्छते। संस्वरते। अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेत्, शृणु।

## (२) धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंगृहात् प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥१॥

वहति भारम्। नदी वहति=स्यन्दत इत्यर्थः। जीवति। नृत्यति। प्रसिद्धेर्यथा-मेघो वर्षति। कर्मणोऽविवक्षातो यथा-'हितान्न यः संश्रृणुते स किं प्रभुः'।

**संमाननोत्सञ्जनाचार्यकरण - ज्ञान - भृति - विगणन - व्ययेषु नियः १।३।३६**

शास्त्रे नयते (३)। दण्डमुन्नयते=उत्क्षिपतीत्यर्थः। माणवकमुपनयते (४)। तत्वं नयते। कर्मकरानुपनयते। करं विनयते=राज्ञे देयं भागं परिशोधयतीत्यर्थः। शतं विनयते=

---

(१) उदाङ् पूर्वकाद् यम् धातोरात्मनेपदे लुङि गन्धनार्थे सिचः कित्वेऽनुनासिकलोपे ह्रस्वादङ्गादिति सिचो लोपे 'उदायत' इति रूपम्। गन्धनभिन्नेऽर्थे तु कित्वाभावेनानुनासिकलोपाभावे ह्रस्वात्परत्वाभावान्न सिचो लुक् उदायंस्त।

(२) धातोरर्थान्तरे=धातुपाठपठितादर्थादन्यत्रार्थे वृत्तेः=वर्तनात् क्रियाऽऽकर्मिका भवति, यथा-प्रापणार्थस्य वह् धातोः भारं वहतीत्यादौ सकर्मकत्वेऽपि स्यन्दनरूपार्थान्तरप्रयोगे 'नदी वहतीत्यादौ' अकर्मकता।

(३) शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थस्तेनशिष्य संमाननं फलितम्।

(४) विधिनाऽऽत्मसमीपं प्रापयतीत्यर्थः। उपनयपूर्वकेणाध्यापनेनोपनेतरि - आचार्यत्वं क्रियते।

धर्मार्थं विनियुङ्क्ते इत्यर्थः। (**उपसर्गादस्यत्यूह्योर्वेति वाच्यम्**) बन्धाग्निरस्यति, निरस्यते। समूहति, समूहते ।

**उपसर्गाद्ध्रस्व ऊहतेः ७।४।३२**

यादौ किति। ब्रह्म समुह्यात्। अग्निं समुह्य ।

**निसमुपविभ्यो ह्वः १।३।३०**

निह्वयते ।

**स्पर्धायामाङः १।३।३१**

कृष्णश्चाणूरमाह्वयते। स्पर्धायां किम्? पुत्रमाह्वयति।

**उदश्चरः सकर्मकात् १।३।५३**

धर्ममुच्चरते=उल्लङ्घ्य गच्छतीत्यर्थः ।

**समस्तृतीया युक्तात्(१) २।३।५४**

रथेन सञ्चरते ।

**दाणश्चसा चेच्चतुर्थ्यर्थे १।३।५५**

समोदाणस्तृतीयान्तेन युक्तादुक्तं (२) स्यात् तृतीया चेच्चतुर्थ्यर्थे। दास्या संयच्छते कामी।

**उपाद्यमः स्वकरणे १।३।५६**

स्वकरणं = स्वीकारः। भार्यामुपयच्छते ।

**विभाषोपयमने १।२।१६**

यमः सिच् किद् वा विवाहेऽर्थे। रामः सीतामुपायत। उपायंस्त वा = उदवोढेत्यर्थः।

**ज्ञा-श्रु-स्मृ-दृशां सनः १।३।५७**

सन्नन्तानामेषां प्राग्वत् (३)। धर्मं जिज्ञासते। शुश्रूषते। सुस्मूर्षते। दिदृक्षते।

**नाऽनोर्ज्ञः(४) १।३।५८**

पुत्रमनुजिज्ञासति ।

---

(१) संपूर्वकात् चरधातोः तृतीयान्तेनयोगे आत्मनेपदमित्यर्थः ।

(२) आत्मनेपदम् ।

(३) आत्मनेपदमित्यर्थः। 'पूर्ववत्सनः' इत्यस्यापवादोऽयम् ।

(४) अनुपूर्वकाज् ज्ञा धातोः सन्नन्तान्नात्मनेपदमित्यर्थः ।

**प्रोपाभ्यां युजेरयज्ञपात्रेषु १।३।६४**

प्रयुङ्क्ते । उपयुङ्क्ते । (स्वराद्यन्तोपसर्गादिति वाच्यम्) उद्युङ्क्ते । नियुङ्क्ते । अयज्ञपात्रेषु किम् ? द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ।

**समः क्ष्णुवः १।३।६५**

संक्ष्णुते शस्त्रम् ।

**गन्धनावक्षेपण-सेवन-साहसिक्य-प्रतियत्न प्रकथनो पयोगेषु कृञः १।३।३२**

गन्धनं = हिंसा । उत्कुरुते = सूचयतीत्यर्थः। अवक्षेपणं = भर्त्सनम् । श्येनोवर्तिकामुदाकुरुते = भर्त्सयतीत्यर्थः । हरिमुपकुरुते = सेवते । परदारान् प्रकुरुते = तेषु सहसा प्रवर्तते। एधोदकस्योपस्कुरुते (१) = गुणमाधत्ते । कथाः प्रकुरुते = प्रकथयतीत्यर्थः । शतं प्रकुरुते = धमार्थ विनियुङ्क्ते । एषु किम् ? कटं करोति ।

## ॥ इत्यात्मनेपदप्रक्रिया ॥

### अभ्यासः

**प्रश्न १. व्यतिलुनीते इत्यस्य साधुत्वप्रकारं दर्शयत**

उ० वि + अति इति उपसर्गद्वयपूर्वकाल्लूञ् धातोर्लटि ततः 'कर्तरि कर्मव्यतिहारे' इति सूत्रेण कर्मव्यतिहारे द्योत्ये कर्तरि आत्मनेपदे कृते लस्य ते 'क्रादि भ्यःश्ना' इति सूत्रेण श्नाप्रत्यये उभयत्र सार्वधातुकसंज्ञायां 'प्वादीनां ह्रस्वः' इति सूत्रेण लूञो ह्रस्वत्वे 'ई हल्यघोः' इति सूत्रेण श्नाप्रत्यस्य आकारस्य ईत्वे तकारस्य एत्वे ततो यणि व्यतिलुनीते इति सिद्ध्यति ।

**प्रश्न २. आहत इत्यस्य सिद्धिपथं दर्शयत**

उ० आङ्पूर्वाद् हन्धातोर्लुङि ' आङो यमहनः' इति आत्मनेपदे वधादेशाभावपक्षे तङि च्लौ सिचि 'हनः सिच्' इति सिचः कित्वे 'अनुदात्तोपदेश........इत्यादि सूत्रेण नलोपे 'ह्रस्वादङ्गात्' इति सिचो लोपे अटि दीर्घे च आहत इति।

**प्रश्न ३. जिज्ञासते इत्यस्य साधनप्रक्रियां दर्शयत**

उ० ज्ञाधातोः सनि 'सन्यङोः' इति द्वित्वेऽभ्यासत्वे ह्रस्वे अभ्यासस्य चर्त्वे 'सन्यतः" इति अभ्यासेत्वे ततो लटि 'ज्ञाश्रुस्मृदृशां सनः' इति आत्मनेपदे तङि शपि पररूपे च उक्तं रूपं सिद्धम् ।

---

(१) एधोदकस्योपस्कुरुते = एधश्चोदकञ्चेति समाहार द्वन्द्वः, एधः = इन्धनम्– उदकं = जलम्, एधोदकम् उपस्कुरुते= 'उपात्प्रतियत्ने' इति सूट् (कृञः प्रतियत्ने' इति षष्ठी) गुणमाधत्ते इत्यर्थः । एधस्य = काष्ठस्य शोषणादि गुणाधानम् । दकस्य = जलस्य तु गन्धद्रव्य संम्पर्कजनित गन्धाधानम् ।

## अभ्यासार्थं प्रश्नाः

(१) व्यतिलुनीते, निविशते, विजयते, अनुक्रीडते, आक्रमते सूर्यः, सन्तिष्ठते, मुक्तावुत्तिष्ठते, उत्तपते, आवधिष्ट, आहत, शास्त्रे नयते, निह्वयते, कृष्णश्चाणूरमाह्वयते, दास्या संयच्छते कामी, राम, सीतामुपायत, हरिमुपकुरुते, एते प्रयोगाः साधु साधनीयाः।

(२) निम्नांकितेषु प्रयोगेषु प्रवर्तमानानि वार्तिकानि उल्लिख्य तेषां कार्याणि च लिखत

(क) धनुषि शिक्षते। (ख) शब्दनित्यमातिष्ठते। (ग) आदित्यमुपतिष्ठते।
(घ) उत्तपते पाणिम्। (ङ) बन्धं निरस्यते।

(३) क्रियापदस्य अशुद्धि परिहरत

(क) भटाः परस्परं संप्रहरन्ति।
(ख) देवीप्रसाद उपानहौ विक्रीणाति।
(ग) बालकाः कन्दुकेन संक्रीडन्ति।
(घ) मुनयः सूर्यमुपतिष्ठन्ति।
(ङ) मल्लः क्रोधेन मल्लमाह्वयति।

(४) अधस्तनानां सूत्राणामुदाहरणानि देयानि

(क) वृत्तिसर्गतायनेषु क्रमः।
(ख) प्रोपाभ्यां समर्थाभ्याम्।
(ग) समवप्रविभ्यः स्थः।
(घ) समो गम्यृच्छिभ्याम्।
(ङ) वेत्तेर्विभाषा।
(च) उपसर्गाद्ध्रस्वस्य ऊहतेः।
(छ) समः क्ष्णुवः।

(५) धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया॥

पद्यमिदं सोदाहरणं स्पष्टं व्याख्यायताम्

(६) विक्रमते, अपजानीते, संपृच्छते, नयते, प्रयुङ्क्ते, प्रकुरुते, उपस्कुरुते एतानि क्रियापदानि प्रयुज्य पृथक् पृथक् वाक्यानि विरचयत।

(७) रूपाणि विलिखत

(क) आङ्‌ पूर्वात् क्रमधातोर्लटि मध्यमपुरुषे ।

(ख) आङ्पूर्वाद्धनधातोर्लुङि उत्तमपुरुषे ।

(ग) सम्पूर्वाद् गम्धातोर्विधिलिङि प्रथमपुरुषे ।

(घ) सम्पूर्वाद् दाण्धातोर्लोटि मध्यमपुरुषे ।

(ङ) श्रुधातोः सनि लटि प्रथमपुरुषे ।

# अथ परस्मैपदप्रक्रिया

'शेषात्कर्तरि परस्मैपदम्' । श्वि–श्वयति ।

**विभाषाश्वेः ६।१।३०**

संप्रसारणं वा लिटि यङि च । शुशाव । शुशुवतुः । (**श्वयतेर्लिटि, अभ्यास–लक्षण प्रतिषेधः**) शिश्वाय । शिश्वियतुः । शिश्वियुः । शूयात् । जृस्तम्भ्विवत्यङ वा ।

**श्वयतेरः ७।४।१८**

अङि । अश्वत् । अश्वन् । विभाषेति चङ । अशिश्वियत् । अश्वयीत् ।

**अनुपराभ्यां कृञः १।३।७९**

कर्तृगेऽपि फले गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति । पराकरोति ।

**अभिप्रत्यतिभ्यः क्षिपः (१) १।३।८०**

**क्षिप प्रेरणे** । स्वरितेत् । अभिक्षिपति ।

**प्राद्वहः १।३।८१**

प्रवहति ।

**परेर्मृषः १।३।८२**

परिमृष्यति ।

**व्याङ्परिभ्यो रमः १।३।८३**

विरमति । आरमति ।

**उपाच्च १।३।८४**

यज्ञदत्तमुपरमति, उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ।

**विभाषाऽकर्मकात् १।३।८५**

उपाद्रमेः परस्मैपदं वा स्यात् । उपरमति, उपरमते । निवर्तते इत्यर्थः ।

---

(१) क्षिप धातुर्हि स्वरितेत्त्वादुभयपदी, ततश्च कर्तृगामिनि क्रियाफले आत्मनेपदे प्राप्ते तत्रापि परस्मैपदविधानार्थमिदं सूत्रम् । अभिप्रत्यतिभ्य उपसर्गेभ्यः परस्य क्षिपः परस्मैपदमेवेति सूत्रार्थः ।

## बुध–युध–नश–जनेङ–प्रु–द्रु–स्रुभ्यो णेः १।३।८६

एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । णिचश्चेत्यस्यापवादः । बोधयति–पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जरयति सुखम् । प्रावयति=प्रापयतीत्यर्थः । द्रावयति । स्रावयति ।

## क्रीङ्जीनां णौ ६।१।४८

आत्वं स्यात् । अध्यापयति (१) ।

## णौ च संश्चङोः २।४।५१

सन्परे चङ परे च णौ इङोगाङ वा । अध्यजीगपत् । अध्यापिपत् । क्रापयति । जापयति ।

## निगरणचलनार्थेभ्यश्च (२) १।३।८७

निगारयति । चलयति । (अदेः प्रतिषेधः) (३) । आदयते देवदत्तेन ।

## अणावकर्मकाच्चित्तवत्कर्तृकात् १।३।८८

ण्यन्तात्परस्मैपदम् शेते । कृष्णस्तं गोपो शाययति ।

## न पा-दम्याङ्यमाङ्यस-परिमुह-रुचि-नृति-वद-वसः १।३।८९

यभ्यो ण्यन्तेभ्यः परस्मैपदं न । पाययते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते । (धेट उपसंख्यानम्) । धापयते । अकर्त्रभिप्राये शेषादिति परस्मैपदं स्यादेव (४) । वत्सान्पाययति पयः ।

## ॥ इति परस्मैपदप्रक्रिया ॥

---

(१) 'इङ अध्ययने' इत्यस्मात् णिचि क्रीङजीनामित्यात्वे पुकि च सति अधिपूर्वत्वे–अध्यापयति ।

(२) निगरणं=भक्षणम्, चलनं=कम्पनम्–इत्येतदर्थकेभ्यो ण्यन्तेभ्यः परस्मैपदमित्यर्थः । णिचश्चेत्यस्यापवादः ।

(३) निगरणार्थत्वेन प्राप्तं निषिध्यते । अदेर्ण्यन्तात्परस्मैपदस्य प्रतिषेधो वक्तव्य इत्यर्थः । आदयते देवदत्तेन, "आदिखाद्योर्न" इति कर्मत्वनिषेधात् तृतीया ।

(४) "अनन्तरस्य विधिर्वा प्रतिषेधो वा" इति न्यायेन पूर्वसूत्रद्वयप्राप्तस्यैव परस्मैपदस्यायं निषेधो न तु शेषात्कर्तरि, इति प्राप्तस्यापीतिभावः । तेन "दमयन्ती कमनीयतामदम्' इत्यादि सिद्धम् ।

## अभ्यासः

**प्रश्न १. अश्वत् इत्यस्य निष्पत्तिप्रक्रियां दर्शयत**

उ०– गतिवृद्धयर्थकात् श्विधातोर्लुङि 'शेषात् कर्तरिपरस्मैपदम्' इति परस्मैपदे ततो लस्य तिपि 'इतश्च' इति इलोपे च्लौ 'जृस्तम्भु–म्रुचु–म्लुचु–ग्रुचु–ग्लुचु–ग्लुञ्चु श्विभ्यश्च' इति वैकल्पिके अङि 'श्वयतेरः' इत्यत्वे ततोऽटि 'अश्वत्' इति रूपम् । अङभावे 'विभाषा धेट्श्वयोः' इति विभाषयो चङि द्वित्वे हलो लोपे अटि इयङि अशिश्वियत्' इति सिध्यति । यदा चङपि न, तदा सिचि इडागमे 'अस्तिसिचोऽपृक्ते इति तस्य ईडागमे 'इट ईटि' इति सलोपे गुणेऽयादेशे ह्म्यन्तेति वृद्धिनिशेधेऽटि अश्वयीत् इति च सिद्धयति ।

**प्रश्न २. बोधयति इति कथं सिध्यति ?**

उ०– अवगमनार्थकाद् बुधधातोर्णौ लघूपधगुणे धातुत्वे लटि 'बुध–युध–नशजनेङ–प्रुद्रु–स्रुभ्यो णेः' इति परस्मैपदे ततो लस्य तिपि सपि गुणेऽयादेशे च उक्तं रूपं सिद्धम् ।

**प्रश्न ३. शाययति इति कथं सिद्धयति ?**

उ०– शीङ स्वप्ने इति धातोर्णौ वृद्धौ धातुत्वे लटि ततः 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदे लस्य तिपि शपि गुणे अयादेशे 'शाययति' इति जायते ।

**प्रश्नः ४. पाययते इत्यस्य साधनप्रक्रियां विलिखत**

उ०– पा पाने इत्यस्माद्धातोर्णौ 'आतो युक् चिण्कृतोः' इति युकि धातुत्वे लटि प्राप्तस्य परस्मैपदस्य 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' इति निषेधात् आत्मनेपदे तङि टेरेत्वे शपि गुणेऽयादेशे पाययते इति ।

## अभ्यासार्थं प्रश्नाः

(१) **अनुकरोति, परिमृष्यति, विरमति, बोधयति, अध्यजीगपत् शाययति, धापयते, एते प्रयोगाः साधु साधनीयाः ।**

(२) **अधस्तनेषु प्रयोगेषु विशेषकार्यविधायकानां सूत्राणामर्थान् विलिख्य तेषां कार्याणि च सुस्पष्टयत ।**

अशिश्वियत्, उपरमति, अध्यापयति, निगारयति, रोचयते ।

(३) **क्रियापदस्य अशुद्धिं परिहरत**

(क) पुत्रः पितरमनुकुरुते ।

(ख) वाग्वती 'वाग्द्वारात्' प्रवहते ।

(ग) आर्त्तानामश्रूणि समेषां हृदयानि द्रावयन्ते ।

(घ) गुरवश्छात्रान् स्नेहेनाध्यापयन्ते ।

(ङ) नटा वीणां वादयन्ति ।

(४) अधोनिर्दिष्टान् प्रयोगान् प्रयुज्य पृथक् पृथक् वाक्यानि विरचयत

पराकरोति, नाशयति, चलयति, अभिक्षिपति शाययति, जनयन्ति, आरमाम ।

(५) निम्नांकितानां सूत्राणामर्थान् स्पष्टीकृत्य तेषामेकैकमुदाहरणञ्च दत्त

(क) उपाच्च ।

(ख) विभाषाऽकर्मकात् ।

(ग) णौ च संश्चङो: ।

(घ) न पादम्याङयमाङयसपरिमुहरुचिनृतिवदवस: ।

(ङ) परेर्मृ षः ।

(६) रूपाणि विलिखत

(क) श्विधातोर्लिटि उत्तमपुरुषे ।

(ख) बुधधातोर्णौ लटि मध्यमपुरुषे ।

(ग) अधिपूर्वकाद् इङधातोर्णौ लुङि प्रथमपुरुषे ।

(घ) विपूर्वाद् रमतेर्लटि उत्तमपुरुषे ।

(ङ) पाधातोर्णौ लटि प्रथमपुरुषे ।

# अथ भावकर्मप्रक्रिया

**भावकर्मणोः (१) १।३।१३**

लस्यात्मनेपदम् ।

**सार्वधातुके यक् ३।१।६७**

भावकर्मवाचिनि सार्वधातुके धातोर्यक् स्यात् । भावः क्रिया । सा च भावार्थक लकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमः पुरुषः । तिङवाच्य क्रियाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादिकम् किन्तु एकवचनमेवोत्सर्गतः, त्वया मया अन्यैश्च भूयते । बभूवे ।

**स्य-सिच्-सीयुट्-तासिषु-भावकर्मणोरुपदेशेऽज्झन-ग्रह-दृशां-चिण्वदिट् च ६।४।६२**

उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च । चिण्वद्भावपक्षे (२)– अयमिट्, चिण्वद्भावाद् वृद्धिः । भाविता । भविता । भाविष्यते । भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट, भविषीष्ट ।

**चिण्भावकर्मणोः ३।१।६६**

च्लेश्चिण् स्याद् भावकर्मवाचिनि तशब्दे परे । अभावि । अभाविष्यत, अभविष्यत । अकर्मकोऽप्युपसर्गवशात्सकर्मकः (३) – अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम् । अन्वभविषाताम् । णिलोपः । भाव्यते (४) । भावयाञ्चक्रे । भावयाम्बभूवे । भावयामासे । चिण्वदिट् । आभीयत्वेनासिद्धत्वाण्णिलोपः । भाविष्यते, (४) भावयिष्यते । भाव्यताम् । अभाव्यत, भाव्येत । भावयिषीष्ट,

---

(१) भावे कर्मणि च यो लकारस्तस्यात्मनेपदमित्यर्थः । लः कर्मणीति सूत्रे सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि च, अकर्मकेभ्यस्तु भावे कर्तरि च लकारा विहितास्तेषु कर्त्तरि लकारा निरूपिताः (दशगण्याम्) अथेदानीं भावकर्मणोर्लकारा निरूप्यन्ते ।

(२) 'सन्नियोगशिष्टानां सहैव प्रवृत्तिः सहैव निवृत्तिरिति' न्यायेन चिण्वद्भाव सन्नियोग शिष्टोऽयमिट् चिण्वद्भावाभावपक्षे नभवति । सेड धातूनां वलादिलक्षणस्त्विट्स्यादेवेति भावः ।

(३) यद्यप्ययं भूधातुरकर्मकस्तथाप्यूपसर्गवशादर्थान्तरवृत्तेर्भवति सकर्मकः, तेन कर्मणि लकारः । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । कर्मणोऽनुक्तत्वाभावान्न द्वितीया, किन्तु प्रातिपदिकार्थमात्रे प्रथमा, कर्तुश्चानुक्तत्वात्तृतीया ।

(४) चिण्वदिट आभीयत्वेनासिद्धत्वाद् भवति णिलोपः ।

भाविषीष्ट । अभावि । अभाविषाताम्, अभावयिषाताम् । बुभूष्यते । बुभूषाञ्चक्रे । बुभूषिता । बुभूषिष्यते । बोभूयते । अकृत्सार्वधातुकयोर्दीर्घः । स्तूयते विष्णुः । स्ताविता, स्तोता । स्ताविष्यते, स्तोष्यते । अस्तावि । अस्ताविषाताम् । अस्तोषाताम् । गुणोर्तीति गुणः– अर्यते । स्मर्यते । ऋच्छत्यृतामिति गुणः । आरे । सस्मरे । उपदेश । ग्रहणाच्चिण्वदिट् आरिता । अर्ता । स्मारिता । स्मर्ता । नलोपः । स्रस्यते । सस्रंसे । इदितस्तु नन्द्यते । इज्यते ।

### तनोतेर्यकि ६।४।४४

आदन्तादेशो वा स्यात् । तायते । तन्यते ।

### तपोऽनुतापे च ३।१।६५

च्लेश्चिण् न कर्म कर्तरि अनुतापे च । अन्वतप्तपापेन । घुमास्थेतीत्वम् । दीयते । धीयते । ददे । दधे ।

### आतो युक् चिण्कृतोः ७।३।३३

आदन्तानां युगागमश्चिणि ञ्णिति कृति च । दायिता । दाता । दायिषीष्ट, दासीष्ट । अदायि । अदायिषाताम् । शम्यते मोहो मुकुन्देन (१) ।

### चिण्णमुलोर्दीर्घोऽन्यतरस्याम् (२) ६।४।९३

चिण् परे णमुल्परे च णौ मितामुपधाया दीर्घो वा । शामिता (३), शमिता, शमयिता । शामिष्यते, शमिष्यते, शमयिष्यते । ण्यन्तत्वाभावे शम्यते मुनिना ।।

### नोदात्तोपदेशस्य मान्तस्यानाचमेः ७।३।३४

उपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अशमि । अदमि । उदात्तोपदेशस्येति किम् ? अगामि । मान्तस्येति किम् ? अवादि । अनाचमेति किम् ? आचामि । **(अनाचमि–कमि–वमिनामिति वक्तव्यम्)** अकामि (४) । अवामि ।

---

(१) शम् धातोर्हेतुमण्णौ–उपधावृद्धौ–अमन्तत्वेन मित्वाद् ह्रस्वे शमीत्यस्मात्कर्मणि लकारो यक् णिलोपः ।

(२) लुटि तासि शमि इता, इति स्थितेऽमन्तत्वेनमित्वान्नित्यमुपधाह्रस्वे प्राप्ते दीर्घोऽनेन विकल्प्यते ।

(३) चिण्वदिति–आभीयत्वेन तस्यासिद्धत्वाद् णिलोपे दीर्घे विकल्पे च शामिता' शमिता, चिण्वत्वाभावे वलादिलक्षणे इति णिलोपाभावे रूपं 'शमयिता' ।

(४) चिणि 'आयादय आर्धधातुके वा' इति णिङभावे रूपमिदम् ।

**भञ्जेश्च चिणि ६।४।३३**

नलोपो वा। अभाजि (१), अभञ्जि। लभ्यते।

**विभाषा चिण्णमुलोः ७।१।६९**

लभेर्नुम् वा। अलम्भि, अलाभि।

## ॥ इति भावकर्मप्रक्रिया ॥

अभ्यासः

**प्रश्न १. भाविता इत्यस्य साधुत्वप्रकारो निर्देश्यः**

उ०– भू धातोरकर्मकतया लः कर्मणि च भावे चाकर्मकेभ्यः" इति भावे अनद्यतने भविष्यति लुटि लस्यात्मनेपदसंज्ञके ते सार्वधातुकत्वे तास् प्रत्यये आर्धधातुकत्वे "स्य-सिच्-सीयुट्-तासिषु भावकर्मणोरुपदेशेऽज्झनग्रह-दृशां वा चिण्वदिट् च" इटि पाक्षिके चिण्वद्भावे इति च अचो ञ्णिति" इति वृद्धौ आवादेशे भावितास् त तस्यडादेशेऽनुबन्धलोपे डित्वाट्टिलोपे भाविता पक्षे चिण्वद्भाव सन्नियोगशिष्टोऽयमिट् चिण्वद्भावाभावपक्षे नभवति, तस्मिन् पक्षे आर्धधातुकत्वे इटि सार्वधातुकसंज्ञाप्रयुक्ते गुणे भविता इति रूपद्वयम् ।

**प्रश्न २. बुभूष्यते, इति प्रयोगं साधयत**

उ०– बुभूष, इत्यस्य सन्नन्ततया सनाद्यन्तेति धातुत्वाद् भावे लटि लस्यामनेपदसज्ञके तादेशे सार्वधातुकत्वे "सार्वधातुके यक्" इति यक्यनुबन्धलोपे आर्धतुकत्वे "अतो लोपः" इति अल्लोपे टेरेत्वे च बुभूष्यते, इति रूपम् ।

**प्रश्न ३. दायिता इति कया रीत्या निष्पद्यते ?**

उ०– दाधातोः कर्मणि लुटि लुटस्ते तासि तस्य डात्वे डित्वसाथ्र्यात् तासष्टेर्लोपे "स्यसिच् सीयुट्" इति पाक्षिके चिण्वद्भावे इटि च कृते चिण्वद्भावात् आतो युक् चिण्कृतोः" इति युगागमेऽनुबन्धलोपे दायिता इति रूपम् ।

**प्रश्न ४. अलम्भि इत्यस्य साधुत्वं वर्णयत**

उ०– लभ् धातोः कर्मणि लुङि लस्य भावकर्मणोः" इति ते सार्वधातुकत्वे "सार्वधातुके यक्" इति यकि प्राप्ते तं प्रबाध्य च्लौ च्लेः सिचि प्राप्ते तं बाधित्वा "चिण् भावकर्मणो रिति च्लेश्चिणि अनुबन्धलोपेऽटिविभाषा चिण्णमुलोः" इति पाक्षिके नुमि अनुस्वारे परसवर्णे च अलम्भि इति रूपम्, पक्षे उपधावृद्धौ अलाभि, इति रूपद्वयम् ।

---

(१) नलोपपक्षे–उपधावृद्धिः ।

# भाववाच्ये कर्मवाच्ये च वाक्यरचना

सकर्मकधातुभ्यो यदा कर्मणि प्रत्ययो विधीयते तदा कर्मण उक्ततया कर्मणि प्रथमा, कर्मणि कृतेन प्रत्ययेन कर्त्तुरनुक्ततया अनुक्तकर्तरि तृतीया भवति, कर्तृक्रिययोः सामानाधिकरण्यं तु कर्तव्यमेव। यथा गम्धातोः कर्मणि यङि लटि ते च गम्यते इति भवति। अस्याः क्रियायाः प्रयोगे पूर्वोक्तवाक्यनिर्माणव्यवस्थया छात्रेण विद्यालयो गम्यते। एतादृशी वाक्यरचना जायते।

अकर्मकधातुभ्यो यदा भावे प्रत्ययो विधीयते तदा भावे विहितप्रत्ययेन कर्तुरनुक्ततया अनुक्तकर्तरि तृतीया भवति। भावप्रत्ययान्तायां क्रियायां सर्वदा एकवचनं च निश्चितम्। भावे कृदन्तप्रत्ययान्तस्य धातोरेकवचनं क्लीवत्वञ्च संपद्यते। यथा ह्री धातो भावे लटि ते यकि च ह्रीयते इति जायते। अस्याः क्रियायाः प्रयोगे पूर्वोक्त वाक्यनिर्माणविधिना–वध्वा ह्रीयते वा वधूभिर्ह्रीयते एतादृशी वाक्यरचना जायते। निम्नस्थया तालिकयाऽपि एतत् स्पष्टं भवति–

**तालिका**

धातुः

| सकर्मकः | | | अकर्मकः | |
|---|---|---|---|---|
| कर्मणि प्रत्ययः | | | भावे प्रत्ययः | |
| कर्ता | कर्म | क्रिया | कर्ता | क्रिया |
| तृतीया | प्रथमा | कर्मानुसारिणी | तृतीया | सर्वदा एक–वचनम् कृदन्ते क्लीवत्वञ्च |
| वाक्यम्– | छात्रेण विद्यालयो गम्यते। | | | |

वाक्यम्– (१) वध्वा ह्रीयते।
(२) वधूभिर्ह्रीयते।

# द्विकर्मकधातूनां क्रियापदेषु वाक्यरचना

दुह्, याच्, पच्, दण्ड्, रुध्, प्रच्छ्, चि, ब्रू, शास्, जि, मथ्, मुष्, नी, हृ, कृष्, वह् एते द्विकर्मका धातवः। एषां कर्तरि प्रयोगे कर्तुरुक्तत्वेन कर्तरि प्रथमा भवति। अत्र अपादानादिविशेषैरविवक्षितं कर्मत्वेन विवक्षितं कारकं सच्च कर्मसंज्ञकं तत्र मुख्यकर्मणि च द्वितीया भवति। क्रिया तु कर्त्रनुसारिणी। यथा दुह् धातुर्द्विकर्मकः। अस्य कर्तरि लटि तिपि 'दोग्धि' इति जायते। अस्य प्रयोगे अपादानादिविशेषैरविवक्षिताद् गौणकर्मत्वेन विवक्षिताद् गोशब्दात् तथा मुख्यकर्मकाद् दुग्धशब्दाच्च कर्मणि द्वितीया जाता। क्रिया तु कर्त्रनुसारिणी। एतेन गोपालो गां दुग्धं दोग्धि एतादृशं वाक्यनिर्माणं जातम्।

दुह्यादिभ्यो द्वादशभ्यो धातुभ्यः कर्मणि प्रत्यये कृते कर्तुरनुक्ततया कर्तरि तृतीया, कर्मण उक्ततया च 'गौणकर्मणि प्रथमा, मुख्यकर्मणि तु द्वितीया भवति। क्रिया च कर्मानुसारिणी। यथा- गोपालेन गौर्दुग्धं दुह्यते इति।

यदा च नीप्रभृतिभ्यश्चतुर्भ्यो धातुभ्यः कर्मणि प्रत्ययो विधीयते तदा तु कर्तुरनुक्ततया कर्तरि तृतीया कर्मण उक्ततया प्रधानकर्मणि प्रथमा गौणकर्मणि च द्वितीया भवति। क्रिया तु कर्मानुसारिणी। यथा—कृषकेण ग्रामं वृषो नीयते।

बुद्धिभक्ष्यार्थशब्दकर्मकधातुभ्यः कर्मणि प्रत्यये कृते तु निजेच्छया एकस्मिन् कर्मणि प्रथमा, अन्यस्मिन् कर्मणि द्वितीया भवति। अन्यत् सर्वं पूर्वोक्तमेव भवति उक्तञ्च—

**गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।**

**बुद्धिभक्ष्यार्थयोः शब्दकर्मकाणां निजेच्छया ॥१॥**

**प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः।**

अधोनिर्दिष्टया तालिकयाऽपि उपर्युक्तं कथनं स्पष्टं भवति—

## द्विकर्मकधातवः

दुह्, याच्, पच्, दण्ड्, रुध्, प्रच्छ्, चि, ब्रू, शास्, जि, मथ्, मुष्, नी, हृ, कृष्, वह्

### कर्तरि प्रत्यये

| कर्ता | गौणकर्म | मुख्यकर्म | क्रिया |
|---|---|---|---|
| प्रथमा | द्वितीया | द्वितीया | कर्त्रनुसारिणी |
| वाक्यम्– गोपालः | गां | दुग्धं | दोग्धि |

### कर्मणि प्रत्यये

**दुह्यादि १२ धातवः**

| कर्ता | गौ.कर्म | मु.कर्म | क्रिया |
|---|---|---|---|
| तृतीया | प्रथमा | द्वितीया | कर्मानुसारिणी |

**बुद्धि भक्ष्यार्थ-शब्दकर्मकधातवः**

| कर्ता | गौ.कर्म | मु.कर्म | क्रिया |
|---|---|---|---|
| तृतीया | प्रथमा वा द्वितीया | द्वितीया वा प्रथमा | कर्मानुसारिणी |

**न्यादि ४ धातवः**

| कर्ता | गौ. कर्म | मु.कर्म | क्रिया |
|---|---|---|---|
| तृतीया | द्वितीया | प्रथमा | कर्मानुसरिणी |

वाक्यम्– (१) गोपालेन गौर्दुग्धं दुह्यते ।

(२) पित्रा पुत्रं मोदका भोज्यन्ते । अथवा पित्रा पुत्रो मोदकान् भोज्यते ।

(३) कृषकेण ग्रामं वृषो नीयते ।

## अभ्यासार्थं प्रश्नाः

(१) भूयते, अभावि, तायते, अदायि, शामिता, अकामि, अभाजि, अलम्भि, एते साधु साधनीयाः ।

(२) निम्नाङ्कितानां प्रयोगाणां निष्पादने विशिष्टकार्यकारीणि सूत्राणि विलिख्य तेषां विशेषकार्यं च दर्शयत

भाविता, अन्वतप्त पापेन, दायिता, अशमि, अवामि ।

(३) अर्थान् विलिखत

(क) सार्वधातुके यक् ।
(ख) चिण् भावकर्मणोः ।
(ग) चिण्–णमुलो दीर्घोऽन्यतरस्याम् ।
(घ) भञ्जेश्च चिणि ।
(ङ) विभाषा चिण्णमुलोः ।

(४) क्रियापदस्य अशुद्धिं परिहरत

(क) अस्माभिर्धनिकैर्भयन्ते ।
(ख) मया त्वमनुभूयते ।
(ग) भक्तैः पुण्यक्षेत्रे देवा इज्यन्ति ।
(घ) कर्णेन दानवीरेण किन्नदायी महात्मने ।
(ङ) सुशीलैश्च विनीतैश्च ज्ञानानि लभ्यत सदा ।

५ निम्नाङ्कितान् प्रयोगान् प्रयुज्य पृथक् पृथग् वाक्यानि रचयत
भूयताम्, स्तूयते, दीयते, अशमि, अलाभि ।

(६) रूपाणि विलिखत

(क) दाधतोः कर्मणि लटि प्रथमपुरुषे ।
(ख) लभ्धातोः कर्मणि लटि उत्तमपुरुषे ।
(ग) शम्धातोः कर्मणि लृटि मध्यमपुरुषे ।
(घ) अनुपूर्वकतपधातोः कर्मणि लुङि प्रथमपुरुषे ।
(ङ) स्तुधातोः कर्मणि लुङि प्रथमपुरुषे ।
(च) भूधातोः भावे प्रथमपुरुषे ।

# अथ कर्मकर्तृप्रक्रिया

यदा (१) कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामपि अकर्मकत्वात्कर्तरिभावे च लकारः ।

### कर्मवत्कर्मणा तुल्यक्रियः ३।१।८७

कार्यातिदेशोऽयम् (२) । कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् । तेन यगात्मनेपदं चिण् चिण्वदिट् च स्युः । पच्यते फलम् । भिद्यते काष्ठम् । अपाचि । अभेदि । भावे तु भिद्यते काष्ठेन । (भूषावाचिनां किरादीनां सन्नन्तानां च यक् चिणौ चिण्वदिट् च नेति वक्तव्यम्) अलङ्कुरुते कन्या । अलमकृत । अवकिरते हस्ती । अवाकीर्ष्ट । अवाकरिष्ट । गिरते । अगीर्ष्ट । अगरिष्ट, अगरीष्ट । आद्रियते । आदृत । किरादिस्तुदाद्यन्तर्गणः । चिकीर्षते कटः, अचिकीर्षिष्ट ।

### तपस्तपः कर्मकस्यैव ३।१।८८

कर्ता कर्मवत् । तप्यते तपस्तापसः । अर्जयतीत्यर्थः । अतप्त । तपः कर्मकस्यैवेति किम ? उत्तपति सुवर्णं सुवर्णकारः । ( सकर्मकाणां प्रतिषेधो वक्तव्यः ) । अजां ग्रामं नयति । (दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्)

### न दुह-स्नु-नमां यक्चिणौ ३।१।८९

एषां कर्मकर्तरि यक्चिणौ न शप् । तस्य लुक् । गौः पयो दुग्धे ।

### अचः कर्मकर्तरि ३।१।६२

अजन्ताच्लेश्चिण् वा कर्मकर्तरि तशब्दे परे । अकारि । अकृत ।

---

(१) यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो नविवक्षते तदा कारकान्तराण्यपि स्वव्यापारे स्वतन्त्रत्वात्कर्तृसंज्ञां लभन्ते इति सिद्धान्ते यदा कर्मैव कर्तृत्वेन विवक्षितं स्यात् तदा कर्माभावात्सकर्मका अपि धातवोऽकर्मका एव भवन्ति । एतेभ्यः कर्तरि भावे च लकाराः ।

(२) शास्त्रातिदेशः कार्यातिदेशश्चेति पक्षद्वयम् । कर्मणि यानि शास्त्राणि प्रवर्तन्ते तानि तुल्यक्रिये कर्तर्यपि प्रवर्तेरन्निति शास्त्रातिदेशपक्षेऽर्थः कार्यातिदेशपक्षे च कर्मणि यानि कार्याणि भवन्ति तद्वत् तानि कर्तर्यपि स्युरित्यर्थः । द्वयोपक्षयोः कार्यातिदेशपक्षो मुख्यः, शास्त्रस्यापि कार्यार्थत्वादतः स एवात्राऽऽश्रितः ।

**दुहश्च ३।१।६३**

तथा। अदोहि, अदुग्ध। लुग्वेति क्सस्य लुक्पक्षेऽयम्। अधुक्षत। उदुम्बरः फलं पच्यते।

**कुषिरजोः प्राचां श्यन्परस्मैपदं च ३।१।९०**

अनयोः कर्मकर्तरि न यक् किन्तु श्यन् परस्मैपदं च। आत्मनेपदापवादः– कुष्यति, कुष्यते वा पादः। रज्यति, रज्यते वा वस्त्रम्। यगविषये तु नास्य प्रवृत्तिः। कोषिषीष्ट। रंक्षीष्ट।

## ॥ इति कर्मकर्तृप्रक्रिया ॥

अभ्यासः

**प्रश्न १. पच्यते फलम्, इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ०– कालः फलं पचति, इत्यत्र यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो नविवक्ष्यते तदा कर्मण एव कर्तृत्वात् पच् धातुरकर्मकः। तस्माद् "लः कर्मणि च भावे चाकर्मकेभ्यः" इति कर्तृरूपेऽर्थे वर्तमानक्रियायां "वर्तमानेलट्" इति कर्तरि लटि "कर्मवत्कर्मणातुल्यक्रियः" इति कर्मवद्भावात् लस्यात्मनेपदसंज्ञके तादेशे सार्वधातुकत्वे यकि अनुबन्धलोपे टेरेत्वे च पच्यते, कर्तरि लकारे कर्तुरुक्तत्वात् कर्तृवाचकफलशब्दात् प्रथमात्वेन फलं पच्यते, इति रूपम्। एवमेव भिद्यते काष्ठम्।

**प्रश्न २. भिद्यते काष्ठेन इत्यस्य सिद्धिप्रकारो दर्शनीयः**

उ०– कर्तृव्यापारस्याविवक्षायां भिदोऽकर्मकत्वात्, भिदः "लःकर्मणि च भावे चाकर्मकेभ्यः" इति भावे "वर्तमाने लट्" इति लटि लःस्थाने "भाव कर्मणोः" इति आत्मनेपदे ते सार्वधातुकत्वे "सार्वधातुके यक्" इति यक्यनुबन्धलोपे कित्वात्मके लघूपधगुणस्य "क्ङिति च" इति निषेधे टेरेत्व च कृते भिद्यते, इति रूपम्। अत्र कर्तुरनभिहितत्वात् कर्तृकरणयोस्तृतीयेति तृतीया भिद्यते काष्ठेन, इति रूपम्।

अभ्यासार्थं प्रश्नाः

(१) **पच्यते फलम्, अभेदि, आवाकीर्ष्ट, तप्यते तपस्तापसः, अजा ग्रामं नयति, गौः पयो दुग्धे, अकारि, कुष्यति पादः, एतेषां सिद्धिपथं दर्शयत।**

(२) **निम्नाङ्कितानां वार्तिकानां सूत्राणाञ्च सोदाहरणमर्थं विलिखत**

(क) भूषावाचिनां किरादीनां सन्नन्तानाञ्च......।

(ख) तपस्तपः कर्मकस्यैव।

(ग) सकर्मकाणां प्रतिषेधो वक्तव्यः ।

(घ) अचः कर्मकर्तरि ।

(ङ) दुहश्च ।

(च) कुषिरजोः प्राचां श्यन्परस्मैपदञ्च ।

(३) अधस्तनवाक्यानां क्रियापदानि शोधनीयानि

(क) वनेषु काष्ठानि भिद्यन्ति ।

(ख) मुनयस्तपस्तप्यन्ति ।

(ग) गृहमेधिन अतिथीन् आद्रीयन्ते ।

(घ) महिषी पयो दोग्धे ।

# अथ लकारार्थप्रक्रिया

**अभिज्ञावचने (१) लृट् ३।२।११२**

स्मृति बोधिन्युपपदे भूतानद्यतने धातोर्लृट् । लङोऽपवादः । **वस निवासे** । स्मरसि कृष्ण ! गोकुले वत्स्यामः । एवं बुध्यसे चेतयसे इत्यादि प्रयोगेऽपि ।

**न यदि ३।२।११३**

यद्योगे उक्तं न । अभिजानासि यद्वने अभुञ्ज्महि (२) ।

**विभाषा साकाङ्क्षे ३।२।११४**

उक्त विषये लृड् वा, लक्ष्य लक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः । स्मरसि कृष्ण ! वने वत्स्यामस्तत्र, गाश्चारयिष्यामः । वासो लक्षणं (३) चारणं लक्ष्यम् । पक्षे लङ । 'परोक्षे लिट्' । चकार । उत्तमपुरुषे (४) चित्तविक्षेपादिना पारोक्ष्यम् । सुप्तोऽहं किल विललाप । (अत्यन्तापन्हवे लिड् वक्तव्यः) कलिङ्गेष्ववात्सीः । नाहं कलिङ्गान् जगाम ।

**प्रश्ने चासन्नकाले ३।२।११७**

पृच्छ्यमानेऽर्थे लिड्विषये लङलिटौ स्त आसन्नकाले । अगच्छत् किम् ?। जगाम किम् ?।

**लट् स्मे ३।२।११८**

लिटोऽपवादः । यजति स्म युधिष्ठिरः ।

**अपरोक्षे च ३।२।११९**

भूतानद्यतने लट् स्यात् स्म योगे । एवं स्म पिता ब्रवीति ।

**ननौ पृष्टप्रतिवचने ३।२।१२०**

भूते लट् । अकार्षीः किम् ? ननु करोमि भोः ।

---

(१) अभिज्ञा=स्मृतिः, सा उच्यतेऽनेनेत्यभिज्ञावचनम्, तस्मिन् अर्थात् स्मृति–बोधके पदे समीपे प्रयुज्यमाने सति ।

(२) प्राप्तस्य लृटो 'न यदि' इति प्रतिषेधादुत्सर्गो लङ् प्रवर्ततेऽर्थः पूर्ववदेव ।

(३) वासो हि गोचारणस्य लक्षणं=ज्ञापकम् गोचारणं च लक्ष्यम्=ज्ञाप्यम् ।

(४) अहमर्थस्य प्रत्यक्षत्वात्परोक्षत्वाभावेन लिट उत्तमपुरुषप्रयोगः कथं स्यादित्यत आह–उत्तम पुरुष इति ।

**नन्वोर्विभाषा ३।२।१२१**

अकार्षीः किम् ? न करोमि, नाकार्षम् । अहं नु करोमि, अहं न्वकार्षम् ।

**पुरि लुङ् चास्मे ३।२।१२२**

पुरा योगे भूतानद्यतने वा लुङ् चाल्लट् न तु स्म योगे । पक्षे यथा प्राप्तम् । वसन्तीह पुरा छात्राः । अवात्सुः । अवसन् । ऊषुर्वा । अस्मे इति किम् ? यजति स्म पुरा । भविष्यतीत्यनुवर्तमाने–

**यावत्पुरानिपातयोर्लट् ३।३।४**

यावद् भुङ्क्ते । निपातयोः किम् ? यावद्दास्यते तावद् भोक्ष्यते । करभूतया पुरा यास्यति (१) ।

**विभाषा कदाकर्ह्योः ३।३।५**

लट् वा स्यात् । कदा कर्हि वा भुङ्क्ते । भोक्ष्यते भोक्ता वा ।

**वर्तमानसामीप्ये वर्तमानवद् वा ३।३।१३१**

वर्तनाने ये प्रत्यया उक्तास्ते वर्तमान समीपे भूते भविष्यति च वा स्युः । कदा आगतोऽसि । अयमागच्छामि । आगमं वा । कदा गमिष्यसि– एष गच्छामि, एष गमिष्यामि वा ।

**आशंसायां (२) भूतवच्च ३।३।१३२**

भविष्यत्काले भूतवद् वर्तमानवच्च प्रत्यया वा स्युराशंसायाम् । देवश्चेदवर्षीद् वर्षति वर्षिष्यति वा, धान्यमवाप्स्म, वपामः, वप्स्यामो वा ।

**क्षिप्रवचने लृट् (३) ३।३।१३३**

क्षिप्र पर्याये उपपदे पूर्वविषये लृट् । वृष्टिश्चेत क्षिप्रमाशु त्वरित वा आयास्यति शीघ्रं वप्स्यामः ।

**आशंसावचने लिङ् ३।३।१३४**

आशंसावाचिन्युपपदे भविष्यति लिङ् स्यात्, न भूतवत् । गुरुश्चेदुपेयादाशंसे अधीयीय ।

**हेतुहेतुमतोर्लिङ् (४) ३।३।१५६**

वा स्यात् । कृष्णं नमेश्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति । भविष्यत्येवेष्यते । नेह । हन्तीति पलायते ।

---

(१) रेफान्तस्य नगरीवाचकस्य पुर्शब्दस्य तृतीयान्तमिदं रूपम्, तद्बोधयितुमेव करणभूतयेत्याह ।

(२) अप्राप्तस्य प्रियस्य प्राप्तीच्छा = आशंसा । सा च भविष्यद् विषयैव, भूतेच्छाविरहात् ।

(३) वचन ग्रहणात् क्षिप्रपर्याये – इति लभ्यते ।

(४) कार्यकारणभावे द्योत्ये वा लिङित्यर्थः ।

## इच्छार्थेषु लिङ्लोटौ ३।३।१५७

इच्छामि भुञ्जीत भुङ्क्ताम्, वा भवान् । एवं कामये प्रार्थये । (कामप्रवेदन(१) इति वक्तव्यम्) । नेह । इच्छन्करोति ।

## लिङ् च ३।३।१५६

समानकर्तृकेषु इच्छार्थेषु । भुञ्जीयेतीच्छति । विधिनिमन्त्रणेतिलिङ् । विधिः = प्रेरणं भृत्यादेर्निकृष्टष्य प्रवर्तनम्, यजेत । निमन्त्रणं = नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्, इह भुञ्जीत । आमन्त्रणं कामचारानुज्ञा, इह आसीत । अधीष्टः = सत्कारपूर्वको व्यापारः, पुत्रमध्यापयेद् भवान् । संप्रश्नः = संप्रधारणम्, किं भो वेदमधीयीय उत तर्कम् । प्रार्थनं = याञ्चा, भो भोजनं लभेय ? एवं लोट् ।

## प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ३।३।१६३

प्रैषो=विधिः । अतिसर्गः=कामचारानुज्ञा । भवता यष्टव्यम् । चाल्लोटोऽनुकर्षणं प्राप्तकालार्थम् । भवान् यजताम् ।

## अर्हे कृत्यतृचश्च ३।३।१६६

चाल्लिङ् । त्वं कन्यां वहेः ।

## शकि लिङ् च ३।३।१७२

शक्तौ लिङ् स्यात् चात्कृत्याः । त्वं भारं वहेः ।

## धातुसम्बन्धे प्रत्ययाः ३।४।१

धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः । तिङन्तवाच्यक्रियायाः (२) प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः । वसन्ददर्श । भूते लट् । अतीतवासकर्तृकर्तृकं दर्शनमित्यर्थः । सोमयाज्यस्य पुत्रो भविता । सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम् ।

## क्रियासमभिहारेलोट् लोटो हिस्वौ वा च तध्वमोः ३।४।२

पौनः पुन्ये भृशार्थे च द्योत्ये धातोर्लोट् तस्य च हिस्वौ स्तः । तिङामपवादः । तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ च । तध्वमोर्विषये तु हिस्वौ वा स्तः । पुरुषैकवचनसंज्ञे नानयोरति

---

(१) परम्प्रतिस्वाभिप्रायाविष्करणम् = कामप्रवेदनम् ।

(२) वसन् ददर्श इत्यादौ तिङन्तवाच्या दर्शनादिक्रिया प्रधाना, वासादिक्रिया तु दर्शनादिक्रियार्थत्वात्, गुणभूता, अतः प्रधानभूतदर्शनादिक्रियानुसारेण गुणभूतवासादिक्रियावाचिभ्य एवेह कालान्तरेषु प्रत्यया विधीयन्ते ।

दिश्येते । हिस्व विधान सामर्थ्यात् (१) । तेन सकलपुरुषवचन विषये परस्मैपदिभ्यो हिः कर्तरि, आत्मने पदिभ्यः स्वो भावकर्मकर्तृषु ।

**समुच्चयेऽन्यतरस्याम् ३।४।३**

अनेकक्रियासमुच्चये, द्योत्ये प्रागुक्तं वा स्यात् ।

**यथाविध्यनुप्रयोगः पूर्वस्मिन् ३।४।४**

आद्ये लोड् विधाने लोट् प्रकृति भूत एव धातुरनुप्रयोज्यः ।

**समुच्चये सामान्यवचनस्य ३।४।५**

समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात् । अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च । ततः सङ्ख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः (क्रियासमभिहारे द्वे वाच्ये) याहि याहीति याति । पुनः पुनरतिशयेन वा यानं ह्यन्तस्यार्थः । एक कर्तृकं वर्तमानं यानं यातीत्यस्य । इति शब्दस्तु अभेदान्वये तात्पर्यं ग्राहयति । एवं यातः (२) । यान्ति । याथः । याथ । यात यातेति यूयं याथ । याहि याहि, इति, अयासीत् । यास्यति वा । अधीष्वाधीष्वेत्यधीते ध्वं विषयेतु–पक्षे अधीध्वमधीध्वमिति यूयमधीध्वे । समुच्चये–सक्तून् पिब, धानाः खादेत्यभ्यवहरति । अन्नं भुङक्ष्व, दाधिकमास्वादस्वेत्यभ्यवहरते । त ध्वमोस्तु पिबत खादतेत्यभ्यवहरथ । भुङ्ग्ध्वमास्वादध्वमित्यभ्यवहरध्वे । पक्षेतु हिस्वौ । अत्र समुच्चीयमान विशेषाणामनुप्रयोगार्थेन सामान्येन भेदान्वयः । पक्षे सक्तून् पिबति । धानाः खादति । अन्नं भुङक्ते । दाधिकमास्वादते । एतेन–

**'पुरीमवस्कन्द' (३) लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।**
**विगृह्य चक्रे नमुचिद्विषाबली य इत्थमस्वास्थ्य मर्हदिवं दिवः ।**

**(माघ सर्ग ८-श्लोक ५१)**

---

(१) यदि हि मध्यमपुरुषत्वम् एकवचनत्वञ्चातिदिश्यत्वेन विवक्षितमभविष्यत्तर्हि सर्ववचनेषु हिस्वविधानं व्यर्थमभविष्यत्–अर्थात्–युष्मत्सामानाधिकरण्ये–एकत्वे च सत्येव लोटो हिस्वौ स्यातामन्यत्र तु यथायथं तिबाद्यादेशाः स्युः, तथा सति लोटो हिस्वविधानस्यानर्थक्यं स्फुटमेव । अतो न पुरुषवचनातिदेशः ।

(२) याहि याहि इति यातः याहि याहि–इति यान्ति । याहि याहि–इति यासि । याहि याहि-इति यामि–इत्यादयः ।

(३) 'समुच्चयेऽन्यतरस्याम्' 'समुच्चये सामान्य वचनस्य' इति सूत्रद्वयेन तदुदाहरणप्रदर्शनेन च पुरीमवस्कन्देत्यादि माघकाव्यस्थं व्याख्यातमित्यर्थः । बली=रावणः नमुचिद्विषा=इन्द्रेणसह, विगृह्य=विरोधं प्राप्य, पुर्याः=अमरावत्याः अवस्कन्दनम्=पीडनं नन्दनवनस्य लवनं=कर्तनं रत्नानां मोषणममराङ्गनानां हरणमित्येवम्प्रकारेणाऽहर्दिवम्=अहन्यहनि दिवः=स्वर्गस्य अस्वास्थ्यञ्चक्रे=कृतवानित्यर्थः । तथैव फलितमाह=अवस्कन्दन लवनादिरूपतेति ॥

इति व्याख्यातम् । अवस्कन्दन लवनादिरूपा भूतानद्यतन परोक्षा एककर्तृका अस्वास्थ्य क्रियेत्यर्थात् । इह पुनः पुनश्चकन्देत्यादिरर्थ इति व्याख्यानं भ्रममूलकमेव । द्वितीयसूत्रे क्रियासमभिहारे इत्यस्याननुवृत्तेः । लोडन्तस्य द्वित्वापत्तेश्च । पुरीमवस्कन्देत्यादि मध्यमपुरुषैकवचनमित्यपि केषाञ्चित् भ्रम एव । पुरुष वचनसंज्ञे इह नेत्युक्तत्वात् ।।

## ।। इति तिङन्तप्रकरणं समाप्तम् ।।

### अभ्यासः

**प्रश्न १. अभिजानासि कृष्ण ! यद्वने अभुञ्ज्महि, इत्यस्य सिद्धये प्रवर्तमानं सूत्रं लिखत**

उ०– अभिजानासि यद्वने अभुञ्ज्महि, इत्यत्र "अभिज्ञावचने लृट्" इति प्राप्तस्य लृटः अपवादसूत्रं "न यदि" इति लृटं प्रबाध्य लङि इति ।

**प्रश्न २. स्मरसि कृष्ण ! वने वत्स्यामस्तत्र, गाश्चारयिष्यामः, इत्यत्र प्रवर्तमानं सूत्रं दर्शयत**

उ०– अभिज्ञावचने लृट्' इति नित्ये लृटि प्राप्ते "विभाषा साकाङ्क्षे" इति पाक्षिके लृटि स्मरसि कृष्ण ! वने वत्स्यामस्तत्र गाश्चारयिष्यामः । पक्षे लङि ।

**प्रश्न ३. यजति स्म युधिष्ठिरः, इयत्त्र प्रवर्तमानं सूत्रं दर्शयत**

उ०– यजति स्म युधिष्ठिरः, इत्यत्र प्राप्तं लिट्लकारं प्रबाध्य "लट् स्मे" इति सूत्रेण लटि सति यजति स्म युधिष्ठिरः, इति । स्म शब्दो भूतकाल द्योतकः ।

**प्रश्न ४. यावद्भुङ्क्ते, इति कया रीत्या सिध्यति ?**

उ०– यावदिति निपातयोगे "यावत्पुरानिपातयोर्लट्" इति लटि यावद्भुङ्क्ते इति ।

### अभ्यासार्थं प्रश्नाः

(१) **स्मरसि कृष्ण ! गोकुले वत्स्यामः । अगच्छत् किम् ? यजति स्म युधिष्ठिरः । वसन्तीह पुरा छात्राः । गुरुश्चेदुपेयाद् आशंसे अधीयीय । इच्छामि भुञ्जीत भवान् । त्वं कन्यां वहेः । सोमयाज्यस्य पुत्रो भविता एषु वाक्येषु प्रयुक्तलकाराणां सूत्रोल्लेखनपुरःसरं साधुत्वं प्रतिपादयत ।**

(२) **अधस्तनेषु वाक्येषु केन सूत्रेण को लकारः प्रतिपादितः इति स्पष्टं विलिखत**

(क) अभिजानासि कृष्ण ! यद्वने अभुञ्ज्महि ।

(ख) अकार्षीः किम् ? ननु करोमि भोः ।

(ग) कदा आगतोऽसि ? अयमागच्छामि ।

(घ) कृष्णं नमेच्चेत् सुखं यायात् ।

(ङ) त्वं भारं वहेः ।

(३) संशोध्यन्तामधस्तनवाक्यानां क्रियापदानि

(क) रामराज्ये प्रजाः सदाचारिण्यः बभूवुः स्म ।

(ख) स्मरसि सखे ! छात्रावासे अवसाम ।

(ग) त्वं पुस्तकमचूचुरः ? नाहं कदापि पुस्तकमचूचुरम् ।

(घ) त्वमपठीः किम् ? ननु पठिष्यामि भोः ।

(४) सोदाहरणं सूत्राऽऽशयं प्रकटयत

(क) न यदि ।

(ख) अपरोक्षे च ।

(ग) आशंसायां भूतवच्च ।

(घ) वर्तमानसामीप्ये वर्तमानवद्वा ।

(ङ) हेतुहेतुमतोर्लिङ् ।

(च) प्रैषातिसर्ग प्राप्तकालेषु कृत्याश्च ।

(छ) शकि लिङ् च ।

(५) अधस्तनं पद्यं व्याकरणदृष्ट्या विश्लेष्य व्याख्यायताम्

पुरीमवस्कन्द लुनीहि नन्दनं
मुषाण रत्नानि हरामराङ्गनाः ।

विगृह्य चक्रे नमुचिद्विषा बली
य इत्थमस्वास्थ्यमहर्दिवं दिवः ।

# अथ कृदन्तप्रकरणम्

## तत्रादौ कृत्यप्रक्रिया

**धातोः ३।१।९१**

आतृतीयाध्यायान्तं ये प्रत्ययास्ते धातोः परे स्युः । कृदतिङिति कृत्संज्ञा (१)।

**वाऽसरूपोऽस्त्रियाम् ३।१।९४**

अस्मिन्धात्वधिकारेऽसरूपोऽपवादः प्रत्यय उत्सर्गस्य वा बाधकः स्त्र्यधिकारोक्तं विना ।

**कृत्याः ३।१।९५**

ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः ।

**कर्तरि कृत् ३।४।६७**

कृत्प्रत्ययः कर्तरि स्यात् । इति प्राप्ते

**तयोरेव कृत्य–क्त–खलर्थाः ३।४।७०**

एते भावकर्मणोरेव स्युः ।

**तव्यत्तव्यानीयरः (२) ३।१।९६**

धातोरेते स्युः । एधितव्यम्, एधनीयं त्वया । भावे औत्सर्गिक मेकवचनं क्लीबत्वं च। चेतव्यश्चयनीयो वा धर्मस्त्वया (३) । (**केलिमर उपसंख्यानम्** (४) ।

---

(१) तेन सर्वेऽपिकृत्प्रत्ययाः धातोः परे भवन्ति, इति निष्पन्नम् ।

(२) तव्यत्, तव्यः, अनीयर् इति प्रत्ययत्रयम् । तव्यत्तव्ययोः समानरूपत्वेऽपि 'तित्स्वरित' मिति स्वरे भेदः । तेन 'पूरण गुण' इति सूत्रे तव्यप्रत्ययान्तस्य समासनिषेधः, यथा– ब्राह्मणस्य कर्तव्यम् । तव्यत्प्रत्ययान्तस्य तु समासो भवत्येव, यथा– स्वकर्तव्यम् ।

(३) अन्ये प्रयोगाः यथा– त्वया व्याकरणं पठितव्यम् । उदीयमानः सूर्यो न दर्शनीयः । राज्ञा कटके सेना स्थापनीया। षडङ्गो वेदोऽध्येतव्यः । मात्रा पुत्रो रक्षणीयः। राज्ञा प्रजाः पुत्रव-त्पालनीयाः । गन्तव्योऽध्वा दीर्घोऽस्ति । प्रातरुत्थाय विष्णुस्तोतव्यः । दिवा नशयितव्यम् । क्षत्रियैः स्वाभिमानिभिर्भवितव्यम् इत्यादि ।

(४) भावकर्मणोरर्थयोर्धातोः केलिमर्प्रत्ययोऽपि वक्तव्य इत्यर्थः, ककारो रेफश्चात्र इत्संज्ञकः ।

पचेलिमा माषाः, पक्तव्या इत्यर्थः । भिदेलिमाः (१) सरलाः । कर्मणि प्रत्ययः । **(वसेस्तव्यत्कर्तरि णिच्च)** वसतीति वास्तव्यः ।

**कृत्यचः ८।४।३०**

उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात् । प्रयाणीयम् । अचः किम् ? प्रमग्नः (२) । **(निर्विण्णस्योपसंख्यानम्)**

**णेर्विभाषाः ८।४।३०**

प्राग्वत्। प्रयापणीयम् । प्रयापनीयम् ।

**हलश्चेजुपधात् ८।४।३१**

हलादेरिजुपधाद्धातोः परस्य कृन्नस्याचः परस्य णो वा । प्रकोपणीयम् । प्रकोपनीयम् । हलः किम् ? प्रोहणीयम् । इजुपधात्किम् ? प्रवपणीयम्(३) ।

**इजादेः सनुमः ८।४।३२**

सनुमश्चेद् भवति इजादेर्हलन्ताद्विहितो य कृत् तत्स्थस्यैव। **'इखि गतो'** इति धातोः– प्रेङ्खणीयम् । इजादेः किम् ? **'मगि सर्पणे'** प्रमङ्गनीयम् ।

**वा निंस–निक्ष–निन्दाम् ८।४।३३**

एषां नस्य णो वा कृति । प्रणिंसितव्यम्, प्रनिंसितव्यम् ।

**(४) न भा–भू–पू–कमि–गमि–प्यायी–वेपाम् ८।४।३४**

एभ्यः कृन्नस्य णो न । प्रभानीयम् । प्रभवनीयम् । **(ण्यन्तभादीनामुपसंख्यानम्)** प्रभापनीयम् ।

---

(१) कित्वान्नोपधागुणः ।

(२) अचः परत्वाभावान्नस्य णत्वं न ।

(३) नात्र धातुः इजुपध इति न णत्वविकल्पः किन्तु कृत्यच इति नित्यं णत्वम् ।

(४) 'कृत्यचः' इति प्राप्ते निषेधोऽयम् ।

**कृत्यल्युटो बहुलम् ३।३।११३**

क्वचित्प्रवृत्तिः(१) क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥

स्नान्त्यनेन स्नानीयं (२) चूर्णम्। दीयतेऽस्मै (३)। दानीयो विप्रः।

**ऋदुपधाच्चाक्लृपिचृतेः ३।१।११०**

क्यप् स्यात्। वृत्– वृत्यम्(४)। वृध्–वृध्यम्। क्लृपि चित्योस्तु कल्प्यम्(५)। चर्त्यम्।

**अचो यत् ३।१।९७**

अजन्ताद् धातोर्यत् स्यात्। चेयम्(६)। जेयम्।

**ईद्यति ६।४।६५**

यति परे आत ईत्। गुणः। देयम्। ग्लेयम्(७)।

**पोरदुपधात् ३।१।९८**

पवर्गान्तादुपधाद्यत्। ण्यतोऽपवादः। शप्यम्। लभ्यम्।

**आङो यि ७।१।६५**

आङः परस्य लभेर्नुम् यादौ प्रत्यये। आलम्भ्यो गौः।

---

(१) क्वचित्प्रवृत्तिः=अप्राप्तस्यापीति शेषः। यथा– स्नानीयं चूर्णम् इत्यत्र करणेऽप्राप्तस्यापि अनीयर् प्रत्ययस्य प्रवृत्तिः। क्वचिदप्रवृत्तिः=प्राप्तस्यापीति शेषः, यथा– अग्रसरः इत्यत्र पूर्वपदस्यैदन्तत्वाप्रवृत्तिर्बाहुलकात्। क्वचिद्विभाषा=विकल्पः, यथा– 'मघवा बहुलम्' इति विकल्पः। क्वचिदन्यदेव=विकल्पप्राप्तस्यापि नित्यत्वादिकम्, यथा– उन्मत्तगङ्गम् इत्यत्र नित्यमंभावः। तृतीयासप्तम्योर्बहुलमिति बहुल ग्रहणात्।

(२) करणे अनीयर्।

(३) सम्प्रदाने अनीयर्।

(४) कित्त्वान्नोपधागुणः।

(५) ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः, उपधागुणः।

(६) सार्वधातुकार्धधातुकयोः' इति गुणः।

(७) आदेच उपदेशेऽशिति' इति आत्वे, ईत्वे गुणः।

**उपात्प्रशंसायाम्**(१) **७।१।६६**

उपलम्भ्यः साधुः । स्तुतौ किम् ? उपलब्धुं शक्यः– उपलभ्यः ।

**शकि–सहोश्च**(२) **३।१।९९**

शक्यम् । सह्यम् ।

**गद–मद–चर–यमश्चानुपसर्गे** (३) **३।१।१००**

गद्यम् । मद्यम् । चर्यम् । (**चरेराङि चागुरौ**) आचर्यो देशः । अगुरौ किम् ? आचार्यो गुरुः । यम्यम् ।

**अवद्य–पण्य–वर्या–गर्ह्य–पणितव्यानिरोधेषु** (४) **३।१।१०१**

अवद्यं पापम् । पण्यं विक्रेयम् । शतेन वर्या कन्या ।

**वह्यं करणम् ३।१।१०२**

वहन्त्यनेनेति वह्यं शकटम् । वाह्यमन्यत् ।

**अर्यः स्वामिवैश्ययोः ३।१।१०३**

अनयोः किम् ? आर्यो ब्राह्मणः ।

**उपसर्या काल्या प्रजने ३।१।१०४**

गर्भग्रहणे प्राप्तकाला चेदित्यर्थः । उपसर्या गौः । गर्भाधानार्थं वृषभेणोपगन्तुं योग्यत्यर्थः । प्रजने काल्येति किम् ? उपसार्या काशी । प्राप्तव्येत्यर्थः ।

**अजर्यं संगतम् ३।१।१०५**

विशेष्यं चेत् । न जीर्यतीत्यजर्यम् = सतां संगतम् ।

**वदः सुपि क्यप् च ३।१।१०६**

चाद्यत् । ब्रह्मोद्यम् । ब्रह्मवद्यम् ।

---

(१) उपपूर्वाद् लभेर्नुम् स्यात् प्रशंसायामित्यर्थः ।

(२) ण्यतोऽपवादो यत् इत्यर्थः ।

(३) उपसर्गरहितेभ्यो गदादिभ्योण्यतोऽपवादो यत् इत्यर्थः ।

(४) गहर्य पणितव्या निरोधेष्वर्थेषु क्रमेण अवद्य पण्य वर्या निपात्यन्ते इत्यर्थः ।

**भुवो भावे ३।१।१०७**

क्यप् । ब्रह्मणो भावो ब्रह्मभूयम् (१) ।

**हन स्त च ३।१।१०८**

चात्क्यप् । ब्रह्मणो हननं ब्रह्महत्या ।

**एति–स्तु–शास्वृ–दृ–जुषः क्यप् ३।१।१०६**

**ह्रस्वस्य पिति कृति तुक् ६।१।७१**

इत्यः । स्तुत्यः । शिष्यः । वृ इति वृञो ग्रहणं न वृङः । वृत्यः । वृङस्तु वार्या ऋत्विजः । आदृत्यः । जुष्यः । पुनः । क्यब्रुक्तिः परस्यापि ण्यतो बाधनर्था। अवश्यस्तुत्यः ।

**मृजेर्विभाषा ३।१।११३**

मृजेः क्यब्वा । मृज्यः ।

**ऋहलोर्ण्यत् ३।१।१२४**

ऋवर्णान्ताद्धलन्ताच्च ण्यत् ।

**चजोः कुघिण्यतोः ७।३।५२**

चजोः कुत्वं घिति ण्यति च। (**निष्ठायाः मनिट इति वक्तव्यम्**) तेनेह न–गर्ज्यम् । मार्ग्यः (२)।

**ओरावश्यके ३।१।१२५**

ण्यत्। पाव्यम् ।

**लुम्पे दवश्यमः (३) कृत्ये तुं काममनसोरपि ।**
**समो वा हिततयोर्मांसस्य पचियुड्घञोः ॥**

अवश्यलाव्यम् ।

---

(१) कित्वाद्गुणाभावः ।

(२) क्यपोऽभावपक्षे ण्यत्प्रत्ययः, 'मृजेर्वृद्धिः' वृद्धौ कुत्वे रूपम्–मार्ग्यः = शोधनीयः ।

(३) अवश्यम् शब्दस्य मकारो लुम्पेत् कृत्ये, यथा–अवश्यलाव्यम् । तुम् इत्यस्य मकारो लुम्पेत् कामशब्दे मनःशब्दे च परे, यथा–कर्तुंकामः गन्तुमनाः इत्यादि । तथा हितशब्दे ततशब्दे च परे सम् शब्दस्य मकारो वा लुम्पेत्, यथा–सहितम्–संहितम् । सततं–सन्ततम् । तथा युट्प्रत्ययान्ते घञ्प्रत्ययान्ते च पच् धातौ परे मास शब्दस्य मकारो लुम्पेत्, यथा–मांस्पचनी । मांस्पाकः ।

**भव्य-गेय-प्रवचनीयोपस्थापनीय-जन्याप्लाव्यापात्या वा ३।४।६८**

एते कृत्यान्ताः कर्तरि वा निपात्यन्ते । भवतीति भव्यः । भव्यमनेन वा ।

**भोज्यं भक्ष्ये ७।३।६९**

भोग्यमन्यत् ।

**राजसूय-सूर्य-मृषोद्य-रुच्य-कुप्य-कृष्टपच्याऽव्यथ्याः ३।१।११४**

एते सप्त क्यबन्ताः निपात्यन्ते ।

**भिद्योध्यौ नदे ३।१।११५**

नदे किम्? भेत्ता। उज्झिता ।

**पुष्यसिध्यौ नक्षत्रे ३।१।११६**

अधिकरणे क्यब् निपात्यते। पुष्यन्त्यस्मिन्नर्थाः पुष्यः। सिध्यन्त्यस्मिन् सिध्यः ।

**विपूय - विनीय - जित्या-मुञ्ज - कल्क - हलिषु ३।१।११७**

विपूयो मुञ्जः। विनीयः कल्कः। जित्यो हलिः।

**प्रत्यपि भ्यां ग्रहेः २।१।११८**

(छन्दसीति वक्तव्यम्) प्रतिगृह्यम्। अपिगृह्यम्। लोके तु प्रतिग्राह्यम् । अपिग्राह्यम्।

**पदास्वैरिबाह्यापक्ष्येषु च (१) ३।१।११९**

अवगृह्यम्। प्रगृह्यं पदम्। अस्वैरी=परतन्त्रः । गृह्यकाः शुकाः । ग्रामगृह्या सेना। आर्यैर्गृह्यते आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः ।

**बिभाषा कृवृषोः (२) ३।१।१२०**

कृत्यम्। वृष्यम्। कार्यम्। वर्ष्यम्।

---

(१) पद- अस्वैरि-बाह्यापक्ष्येष्वर्थेषु ग्रह् धातोः क्यप्, क्यपि सम्प्रसारणम्।

(२) कृञ ऋदन्तत्वात् नित्यं ण्यति प्राप्ते, वृष् धातोर्ऋदुपधत्वात् नित्यं क्यपि प्राप्ते च क्यब्विकल्पोऽयम् ।

**युग्यं च पत्रे ३।१।१२१**

पत्रं वाहनम् । योग्यमन्यत् ।

**अमावस्य (१) दन्यतरस्याम् ३।१।१२२**

अमा सह वसतोऽस्यां चन्द्रार्कौ वित्यमावस्या, अमावास्या वा।

**अग्नौ परिचाय्योपचाय्यसमूह्याः ३।१।१३१**

अग्नावेते साधवः।

**क्रतौ कुण्डपाय्य - संचाय्यौ ३।१।१३०**

**चित्याग्निचित्ये च ३।१।१३२**

चित्योऽग्निः । अग्नेश्चयनमग्निचित्या (२) ।

## ॥ इति कृत्यप्रत्ययाः ॥

### अभ्यासः

(१) ण्वुल्तृचावित्यतः प्राग् ये प्रत्यया विहिता स्ते कृत्यसंज्ञका भवन्ति ।

(२) कृत्य–क्त–खलर्थाः प्रत्यया भावकर्मणोरर्थयोर्भवन्ति ।

(३) केलिमर् प्रत्यये उदाहरणद्वयं यथा– पचेलिमा माषाः । भिदेलिमाः सरलाः ।

(४) वास्तव्य इत्यत्र वसतीति विग्रहे वस्धातो 'वसेस्तव्यत्कर्तरि णिच्चे' ति वार्तिकेन कर्तरि तव्यत्प्रत्यये णित्वे च 'अत उपाधायाः' इति वृद्धौ रूपं साधु ।

(५) ब्रह्महत्या इत्यत्र ब्रह्मणो हननमिति विग्रहे ब्रह्मन्पूर्वक हन् धातोः 'हन स्त च ' इति सूत्रेण भावे क्यप् प्रत्यये तकारान्तादेशे च स्त्रीत्वविवक्षायां टाप् प्रत्यये ब्रह्महत्या इत्यस्य प्रातिपदिकसंज्ञायां स्वादिकार्ये उक्तरूपं सिद्धम् ।

(६) प्र कुप् धातोरनीयर् प्रत्यये – प्रकोपणीयम् । प्रकोपनीयम् ।

प्र इह्व धातो " – प्रेह्वणीयम् ।

प्र भू धातो " – प्रभवनीयम् ।

इत्यादि।

---

(१) ओपपदाद् वसेरधिकरणे ण्यत्, वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते इत्यर्थः ।

(२) अग्निपूर्वात् चिधातोर्ण्यत् तुक् च। स्त्रीत्वं लोकात् ।

## अभ्यासार्थं प्रश्नाः

(१) के प्रत्ययाः कृत्यसंज्ञकाः ।
(२) कृत्य–क्त–खलर्थाः प्रत्ययाः कस्मिन्नर्थे भवन्ति ?
(३) केलिमरप्रत्यये उदाहरणद्वयं देयम् ।
(४) वास्तव्य इति प्रयोगः साध्यताम् ।
(५) प्रयापणीयम् इत्यत्र णत्वविधायकसूत्रं प्रदर्श्यताम् ।
(६) प्रभानीयम् इत्यत्र ससूत्रनिर्देशं णत्वप्रतिषेधः कार्यः ।
(७) कृत्यच इति सूत्रस्यार्थं प्रदर्श्य, उदाहरणं च देयम् ।
(८) चतुर्विधं बाहुलकं प्रदर्श्यताम् ।
(९) चेतव्यो धर्मः, बृत्यम्, चेयम् एते प्रयोगाः ससूत्रनिर्देशं साध्याः ।
(१०) शप्यम्, शक्यम्, गद्यम् एते ससूत्रं साध्याः ।
(११) ब्रह्महत्या, स्तुत्यः, मृज्यः एते प्रत्ययनिर्देशपुरःसरं साधनीयाः ।
(१२) भव्य गेय इति, राजसूय–सूर्य इति च सूत्रद्वयं पूरयत ।

(१३) अधस्तन श्लोकस्यार्थो लेख्यः

लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि
समो वा हिततत‌योर्मांसस्य पचि युड्घञोः ॥

(१४) विभाषा कृवृषोः– इत्यस्यार्थं विलिख्योदाहरणं देयम् ।
(१५) प्रपूर्वक कुप्–इङ्ख–भू धातुभ्योऽनीयर् प्रत्यये रूपाणि दर्श्यन्ताम् ।

# अथ कृत्प्रक्रिया (पूर्वकृदन्तम्)

**ण्वुल्तृचौ ३।१।१३३**

धातोरेतौ स्तः । कर्तरि कृदिति कर्त्रर्थे ।

**युवोरनाकौ ७।१।१**

यु वु एतयोरनुनासिकयोरेतौ स्तः । करोतीति कारकः । कर्ता (१) ।

**नन्दि–ग्रहि– पचादिभ्यो ल्युणिन्य चः ३।१।१३४**

नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनार्दनः । लवणः । गणेनिपातनाण्णत्वम् । ग्राही । स्थायी । मन्त्री । पचः । आकृतिगणोऽयम् ।

**इगुपध–ज्ञा–प्री– किरः कः ३।१।१३५**

एभ्यः कः स्यात् । क्षिपः । बुधः । कृशः । ज्ञः (२) । प्रियः । किरः (३)।

**आतश्चोपसर्गे (४) ३।१।१३६**

प्रज्ञः । सुग्लः ।

**पा-घ्रा-ध्मा-धेट्-दृशःशः ३।१।१३७**

एभ्यः शः स्यात् । पिबः । जिघ्रः । धमः । धयः । पश्यः ।

**अनुपसर्गाल्लिम्प – विन्द – धारि – पारि – वेद्युदेजि – चेति – साति– साहिभ्यश्च ( ५ ) ३।१।१३८**

लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातयः । साहयः । अनुपसर्गात्किम् ? प्रलिपः । (**गवादिषु विन्देः संज्ञायाम्** (६)) गोविन्दः । अरविन्दम् ।

---

(१) एवं भावकः, भविता । रोधकः, रोद्धा । घातकः, हन्ता । चोरकः, चोरयिता, चोरिता इत्यादि ज्ञेयम् ।

(२) 'आतो लोप इटि च' इत्यालोपः ।

(३) कॄ विक्षेपे इत्यस्मात्कप्रत्ययः 'ऋत इद्धातोरि'ति इत्वं रपरत्वम् ।

(४) सोपसर्गात् आदन्ताद्धातोः कप्रत्ययः स्यात् इत्यर्थः ।

(५) उपसर्गरहितेभ्यः सूत्रोक्तेभ्यो धातुभ्यः शप्रत्ययः स्यादित्यर्थः ।

(६) गवादिषूपपदेषु विन्देः शप्रत्ययो वाच्यः, संज्ञायामिति नियमः । 'कर्मण्यण्' इत्यस्यापवादोऽयम् ।

**ददाति-दधात्योर्विभाषा ३।१।१३९**

ददः । दधः । पक्षे वक्ष्यमाणो णः (१) ।

**ज्वलिति-कसन्तेभ्यो णः ३।१।१४०**

वा स्यात् । ज्वालः (२) । ज्वलः । चालः । चलः ।

**श्याद्व्यधास्रु-संस्रुतीणवसाऽवहृ-लिह-श्लिष-श्वसश्च (३) ३।१।१४१**

अवश्यायः । आत्-दायः । धायः । व्याधः । आस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ।

**विभाषा ग्रहः ३।१।१४३**

व्यवस्थित विभाषेयम् । तेन जलचरे ग्राहः ज्योतिषि ग्रहः ।

**गेहे कः ३।१।१४४**

गृह्णाति धान्यादिकमिति गृहम् (४) ।

**शिल्पिनि ष्वुन् ३।१।१४५**

क्रियाकौशलं = शिल्पम् । तद्वत्कर्तरि ष्वुन् स्यात् ।

**षः प्रत्ययस्य १।३।६**

आदिरित् । (नृति-खनि-रञ्जिभ्य एव) नर्तकः । खनकः । (असि अकेऽनेच रञ्जेर्नलोपो वाच्यः ) रजकः ।

**गः स्थकन् ३।१।१४६**

गायते स्थकन् । गाथकः ।

**ण्युट् च ३।१।१४७**

गायनः ।

**प्रु-सृ-ल्वः समभिहारे वुन् ३।१।१४९**

समभिहारग्रहणेन साधुकारित्वं लक्ष्यते । प्रवकः (५)। सरकः । लवकः।

---

(१) 'श्याद् व्यध······' इत्यादि सूत्रेणेति भावः ।

(२) णप्रत्यये उपधावृद्धिः ज्वालः । पक्षेऽच् ज्वलः ।

(३) अनुपसर्गेभ्यः सूत्रोक्तधातुभ्यो नित्यं णप्रत्ययः स्यादित्यर्थः ।

(४) ग्रहिज्येति संप्रसारणम् ।

(५) साधु प्रवते इति विग्रहे, वुन्, अकः, गुणः अवादेशः।

**आशिषि च ३।१।१५०**

वुन् स्यात् । जीवतात्–जीवकः ।

**तत्रोपपदं सप्तमीस्थम् ३।१।९२**

सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत् कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् ।

**कर्मण्यण् ३।२।१**

कर्मण्युपपदे धातोरण् । कुम्भं करोतीति– कुम्भकारः (१)।

**आतोऽनुपसर्गे कः ३।३।३**

कर्मण्युपपदे आदन्ताद्धातोरनुपसर्गात्कः स्यान्नाऽण् । अणोऽपवादः । गोदः । कम्बलदः । अनुपसर्गे किम् ? गोसंदायः (२) । (**मूलविभुजादिभ्यः कः**) मूलानि विभुजतीति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः ।

**सुपिस्थः ३।२।४**

कः स्यात् । समस्थः । विषमस्थः । सुपितियोग विभागादन्यस्मादपि । द्वाभ्यां पिबतीति द्विपः ।

**अम्बाम्ब-गो–भूमि-सव्याप-द्वि-त्रि-कुशे-कु-शं-क्वङ्गु-मञ्जि-पुञ्जि-परमे-बर्हिर्दिव्यग्नि-भ्यः स्थः ८।३।९७**

एभ्यःस्थस्य सस्य षःस्यात् । द्विष्ठः । त्रिष्ठः ।

**तुन्दशोकयोः परिमृजापनुदोः ३।२।५**

तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः । ( **आलस्य सुखाहरणयोरिति वक्तव्यम्** ) तुन्दपरिमृजोऽलसः । शोकापनुदः=सुखस्याहर्ता ।

**प्रे दाज्ञः ३।२।६**

कः स्यात् । सर्वप्रदः । पथिप्रज्ञः ।

---

(१) कुम्भं करोतीति लौकिकविग्रहः । अलौकिक विग्रहस्तु कुम्भ+अस् कार इति । सुबुत्पत्तेः प्रागेव कारशब्देन समासः ।

(२) गां संददातीति विग्रहे उपसर्गपूर्वकत्वान्न कप्रत्ययः किन्तु 'कर्मण्यणि'ति अण्प्रत्ययः । 'आतो युक्' इति युगागमः ।

**समि ख्यः ३।२।७**

गोसंख्यः (१)।

**गापोष्टक् ३।२।८**

कर्मण्युपपदे। सामगः। (**पिबतेः सुराशीध्वोरिति वाच्यम्**) सुरापी। शीधुपी।

**हरते रनुद्यमनेऽच् ३।२।९**

अंशहरः। अनुद्यमने किम्? भारहारः। (**शक्तिलाङ्गलाङ्कुशतोमर–यष्टि–घट–घटी–धनुष्षु ग्रहः**(२) शक्तिग्रहः।

**वयसि च**(३) **३।२।१०**

उद्यमनार्थं सूत्रम्। **कवचहरः = कुमारः**।

**आङि ताच्छील्ये ३।२।११**

पुष्पाण्याहरति तच्छीलः पुष्पाहरः।

**अर्हः ३।२।१२**

अर्हतेरच् स्यात् **कर्मण्युपपदे**। पूजार्हा ब्राम्हणी।

**स्तम्बकर्णयोरमिजपोः ३।२।१३**

(**हस्तिसूचकयोरिति वक्तव्यम्**) स्तम्बेरमो हस्ती। कर्णेजपः सूचकः।

**अधिकरणे शेतेः**(४) **३।२।१५**

खे शेते खशयः। (**पार्श्वादिषूपसंख्यानम्**) पार्श्वाभ्यां शेते पार्श्वशयः। पृष्ठशयः। उदरशयः।

**चरेष्टः ३।२।१६**

अधिकरणे उपपदे। कुरुचरः।

---

(१) गाःसञ्चष्टे इति सम्पूर्वकात् चक्षिङः ख्याञादेशे रूपम्। कप्रत्यये 'आतो लोपः'।

(२) शक्त्यादिषूपपदेषु ग्रहधातोरच् स्यादिति वक्तव्यमित्यर्थः। अत्रवार्तिके घटग्रहणेनैव सिद्धे पुनर्घटी शब्दस्य पृथग् ग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम्।

(३) कर्मण्युपपदे वयसि गम्ये हृञ् धातोरच्प्रत्ययः स्यात्।

(४) सुबन्तेऽधिकरणवाचिन्युपपदे शीङधातोरच्प्रत्ययः स्यात्।
एषु योतेषु कृञष्टः।

**भिक्षा-सेनादायेषु च ३।२।१७**

भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः ।

**कृञो हेतु – ताच्छील्यानुलोम्येषु ३।२।२०**

एषु द्योत्येषु कृञष्टः ।

**अतः कृ–कमि–कंस-कुम्भ-पात्र-कुशा-कर्णीष्वनव्ययस्य ८।३।४६**

अत उत्तरस्याऽनव्ययविसर्गस्य समासे नित्यं सादेशः करोत्यादिषु । यशस्करी विद्या । श्राद्धकरः । वचनकरः ।

**दिवा–विभा–निशा–प्रभा–भास्करान्तानन्तादि बहु–नान्दी–किं–लिपि–लिबि–बलि-भक्ति–कर्तृ–चित्र–क्षेत्र–संख्या–जङ्घा–बाह्वहर्यत्तद्धनुररुष्षु ३।२।२१**

एषु कृञष्टोऽहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः–भास्करः । बहुकरः । एककरः । द्विकरः । अहस्करः । धनुष्करः(१) । अरुष्करः ।

**न शब्द–श्लोक–कलह–गाथा–वैर–चाटु–सूत्र–मन्त्र–पदेषु च ३।२।२३**

एषु कृञष्टो न । शब्दकारः ।

**स्तम्बशकृतोरिन् ३।२।२४**

(व्रीहिवत्सयोरिति वक्तव्यम्) स्तम्बकरि व्रीहिः । शकृत्करिर्वत्सः ।

**हरतेर्दृतिनाथयोः पशौ ३।२।२५**

दृतिहरिः । नाथं=नासारज्जुं हरतीति नाथहरिः पशुः ।

**फलेग्रहिरात्मम्भरिश्च ३।२।२६**

एतौ निपात्येते । चात्कुक्षिम्भरिः । चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः । ज्योत्स्नाकरम्भ-मुदरम्भरयश्चकोराः' इति मुरारिः(२) ।

**एजेः खश् ३।२।२८**

ण्यन्तात् ।

**अरुर्द्विषदजन्तस्य मुम् ६।३।६७**

अरुषो द्विषतोऽजन्तस्य मुम् खिदन्ते नत्वव्ययस्य । शित्त्वाच्छबादि । जनमेजयतीति जनमेजयः । (वात–शुनी – तिल–शर्द्धेष्वज–धेट्–तुद–जहातिभ्यः खश्) वातमजा मृगाः ।

---

(१) 'नित्यं समासेऽनुत्तरपदस्थस्य' इति विसर्गस्य षत्वम् ।

(२) अनर्घराघवनाटके मुरारिकविरित्यर्थः ।

**खित्यनव्ययस्य ६।३।६६**

ह्रस्वः । शुनिन्धयः । तिलन्तुदः । शर्द्धञ्जहा माषाः ।

**नासिकास्तनयोर्ध्मा धेटोः ३।२।२६**

(स्तने धेटो नासिकायां ध्मश्चेति व्यक्तव्यम्) स्तनन्धयः । टित्वात् स्तनन्धयी ।

**नाडीमुष्टयोश्च ३।२।३०**

ध्माधेटोः खश् । नाडीन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः ।

**उदि कूले रुजिवहोः ३।२।३१**

कूलमुद्रुजः । कूलमुद्वहः ।

**वहाभ्रे लिहः ३।२।३२**

वहः = स्कन्धः तं लेढीति वहं लिहो गौः । अभ्रं लिहो वायुः ।

**परिमाणे पचः (१) ३।३।३३**

प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः ।

**मित–नखे च (२) ३।३।३४**

मितम्पचा ब्राम्हणी । नखम्पचा यवागूः ।

**विध्वरुषोस्तुदः (३) ३।२।३५**

विधुन्तुदः । श्ररुन्तुदः ।

**असूर्यललाटयोर्दृशितपोः ३।२।३६**

असूर्यमित्यसमर्थसमासः । दृशिना नञः सम्बन्धात् । असूर्यम्पश्या राजदाराः । ललाटन्तपः सूर्यः ।

---

(१) परिमाणे कर्मण्युपपदे पचेः खश् इत्यर्थः ।

(२) मिते नखे च कर्मण्युपपदे पचेः खश् ।

(३) विधुः श्ररुस् अनयोः कर्मणोरुपपदयोः तुदः खश् ।

**प्रियवशे वदः खच् (१) ३।२।३८**

प्रियंवदः । वशंवदः । (**गमेः सुपि वाच्यः** (२) ) मितङ्गमो हस्ती । (**विहायसो विहच, खच्च डिद्वा वाच्यः**) विहङ्गमः । विहङ्गः । भुजङ्गमः । भुजङ्गः ।

**द्विषत्परयो स्तापेः ३।२।३९**

खच् ।

**खचि ह्रस्वः ६।४।९४**

खचि परे णौ उपधाया ह्रस्वः । द्विषन्तं परं वा तापयति द्विषन्तपः । परन्तपः ।

**वाचि यमो व्रते (३) ३।२।४०**

खच् ।

**वाचंयम–पुरन्दरौ च ६।३।६९**

वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो = मौनव्रती । व्रते किम् ? अशक्त्यादिना वाचं यच्छति वाग्यामः (४) ।

**पूः सर्वयोर्दारिसहोः ३।२।४१**

खच् । पुरंदारयतीति पुरन्दरः । सर्वंसहः । कथं तर्हि भगं दारयतीति भगन्दरः ? बाहुलकात् ।

**सर्व-कूलाभ्र-करीषेषु कषः ३।२।४२**

सर्वङ्कषः = खलः । कूलङ्कषा = नदी । अभ्रङ्कषो = वायुः ।
करीषङ्कषा = वात्या ।

**मेघर्ति भयेषु कृञः ३।२।४३**

मेघङ्करः । ऋतिङ्करः । भयङ्करः । भयशब्देन तदन्तविधिः । अभयङ्करः ।

**क्षेम-प्रिय-मद्रेऽण् च ३।२।४४**

एषु कृञोऽण् चात्खच् । क्षेमङ्करः । क्षेमकारः । प्रियङ्करः । प्रियकारः । मद्रङ्करः । मद्रकारः । कथं तर्हि अल्पारम्भाः क्षेमकरा इति । कर्मणः शेषत्वविवक्षायां पचाद्यच् । एवं गङ्गाधर भूधरादयः ।

---

(१) प्रिये वशे च कर्मण्युपपदे वद् धातोः खच् ।

(२) सुबन्ते कर्मण्युपपदे गमेः खच् । असञ्ज्ञार्थमिदम् ।

(३) वाक् शब्दे उपपदे व्रते गम्ये यमेः खच ।

(४) कर्मण्यण्, उपधावृद्धिः ।

**आशिते भुवः करणभावयोः ३।२।४५**

खच् । आशितो भवत्यनेन– आशितम्भव ओदनः । अशितस्य भवनम् आशितम्भवः ।

**संज्ञायां भृ-तॄ-वृ-जि-धारि-सहि-तपि-दमः ३।२।४६**

खच् । विश्वं बिभर्तीति विश्वम्भरः । रथन्तरं = साम । शत्रुञ्जयो हस्ती । युगन्धरः = पर्वतः । शत्रुंसहः । शत्रुन्तपः । अरिन्दमः ।

**गमश्च (१) ३।२।४७**

सुतङ्गमः ।

**अन्तात्यन्ताध्व-दूर-पार-सर्वानन्तेषु डः ३।२।४८**

गमेः । अन्तगः । (**सर्वत्र–पन्नयोरिति वाच्यम्**) सर्वत्रगः । पन्नं = पतितं गच्छतीति पन्नगः । (**उरसो लोपश्च** (२) उरसा गच्छतीति उरगः (३) । (**सुदुरोरधिकरणे**) सुखेन गच्छन्तीत्यत्र सुगः । दुर्गः । (**अन्यत्रापि दृश्यत इति वाच्यम्**) ग्रामगः ।

(**डे च विहायसो विहादेशो वाच्यः**) विहगः ।

**आशिषि हनः (४) ३।२।४९**

शत्रुं बध्यात् शत्रुहः । आशिषि किम् ? शत्रुघातः (५) । (**दारा वाहनोऽणन्तस्य च टः संज्ञायाम्**) दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः । दार्वाघाटः । (**चारौ वा**) चार्वाघाटः । चार्वाघातः ।

**अपेक्लेशतमसोः ३।२।५०**

अपपूर्वाद्धन्तेर्डः । अनाशीरर्थमिदम् । क्लेशापहः पुत्रः । तमोऽपहः सूर्यः ।

**कुमार–शीर्षयोर्णिनिः ३।२।५१**

कुमारघाती । शिरसः शीर्ष भावो निपात्यते । शीर्षघाती ।

**लक्षणे जायापत्योष्टक् ३।२।५२**

हन्तेष्टक् लक्षणवति कर्तरि । जायाघ्नो ना । पतिघ्नी स्त्री ।

---

(१) संज्ञायां खच् इति शेषः ।

(२) उरस् शब्दे उपपदे गमेर्डः, उरस् शब्दान्त्यस्य (सस्य) लोपश्चेति वक्तव्य मित्यर्थः ।

(३) डित्वात् टिलोपः ।

(४) कर्मण्युपपदे हन्तेर्डः स्यादाशिषि गम्यायामित्यर्थः ।

(५) कर्मण्यण्, होहन्तेरिति हस्य घत्वम्, हनस्त इति नस्य तकारः, उपधावृद्धिः ।

**अमनुष्यकर्तृके च ३।२।५३**

जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। पित्तघ्नं घृतम्। अमनुष्येति किम्? आखुघातः शूद्रः। अथ कथ बलभद्रः प्रलम्बघ्नः कृतघ्न इत्यादि। मूलविभुजादित्वात् सिद्धम्। चोरघातो नगरघातो हस्तीति तु बाहुलकादण्।

**शक्तौ हस्ति-कपाटयोः ३।२।५४**

हन्तेष्टक्। मनुष्यकर्तृकार्थमिदम्। हस्तिघ्नो ना। कपाटघ्नश्चोरः। कवाटेति पाठान्तरम्।

**पाणिघ(१)–ताडघौ शिल्पिनि ३।२।५५**

शिल्पिनि किम्? पाणिघातः। (**राजघ उपसंख्यानम्**) राजानं हन्ति राजघः (२)।

**आढ्य–सुभग–स्थूल–पलित–नग्नान्ध–प्रियेषु च्व्यर्थ्ये। ष्वच्वौ कृञः करणे ख्युन् ३।२।५६**

एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन्। अनाढ्यमाढ्यं कुर्वन्त्यनया आढ्यङ्करणी। अच्वौ किम्? अढ्यी कुर्वन्त्यनेन।

**कर्तरि भुवः खिष्णुच्–खुकञौ ३।२।५७**

आढ्यादिषु च्व्यर्थेच्व्यन्तेषु भवतेः रेतौ स्तः। अनाढ्य आढ्यो भवति आढ्यम्भविष्णुः। आढ्यम्भावुकः।

**सत्सू–द्विष–द्रुह–युज–विद–भिद–च्छिद–जि–नी-राजामुपसर्गेऽपि क्विप् ३।२।६१**

एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे। द्युसत्। सदिरप्रतेरिति षः। उपनिषत्। अन्डसूः। प्रसूः। मित्रद्विट्। प्रद्विट्। मित्रध्रुट्। प्रध्रुट्। गोधुक्। प्रधुक्। अश्वयुक्। प्रयुक्। वेदवित्। निवित्। (**अग्र–ग्रामाभ्यां नयतेर्णो वाच्यः**) अग्रणीः। ग्रामणीः।

**भजो ण्विः (३) ३।२।६२**

अंशभाक्। प्रभाक्।

**अदोऽनन्ने ३।२।६८**

विट् स्यात्। आम मत्तीति आमात्। सस्यात् (४)। अनन्ने किम्? अन्नादः (५)।

---

(१) पाणिताडयोरुपपदयोः हन्तेष्टक् टिलोपो घत्वं च निपात्यते शिल्पिनि गम्ये इत्यर्थः। पाणिं पाणिना वा हन्तीति पाणिघः। ताडनं=ताडः, तेन तं वा हन्तीति ताडघः=मल्लादिः।

(२) हन्तेः टक् टिलोपः, घत्वं च निपातितम्।

(३) सुपि उपसर्गे चोपपदे भज् धातोर्ण्विप्रत्ययः।

(४) सस्य मत्तीति विग्रहः।

(५) 'कर्मण्यण्' इत्यण्।

**क्रव्ये च ३।२।६९**

अदेर्विट् । पूर्वेणसिद्धे वचनं वासरूपेति प्राप्ताण्बाधनार्थम् । क्रव्यात् = आममांस भक्षकः।

**दुहः कप् घश्च ३।२।७०**

कामदुघा ।

**अन्येभ्योऽपिदृश्यते ३।२।७५**

मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः ।

**नेड्वशि कृति ७।२।८**

वशादेः कृत इण्न । सुशर्मा (१) । प्रातरित्वा (२) ।

**विड्वनो रनुनासिकस्यात्(३) ६।४।४१**

विजायत इति विजावा (४) । **ओणृ अपनयने** । अवावा । रांट । रेट् । सुगण् ।

**क्विप् च ३।२।७३**

अयमपि दृश्यते । उखास्रत् । पर्णध्वत् । वाहभ्रट् ।

**अन्तः ८।४।२०**

पदान्तस्थानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत् । हे प्राण् (५) (**आशासः क्वावुपधाया इत्वं वाच्यम्**) आशीः (६) । इत्वोत्वे । गीः (७) । पूः । 'मोनो धातोः' प्रतान् । प्रशान् ।

**गमः क्वौ ६।४।४०**

अनुनासिकलोपः । अङ्गत् । (**गमादीनामिति वक्तव्यम्**) परीतत् । संयत् । (**ऊङ्च गमादीनामिति वक्तव्यम्, लोपश्च**) गूः । भ्रूः ।

---

(१) सुष्ठु शृणातीति शृधातोर्मनिन् ।

(२) प्रातरेतीति (प्रातर् इ+क्वनिप् । ह्रस्वस्येति तुक् ।

(३) विड्वनोः परतोऽनुनासिक स्यात् ।

(४) वि–जन्+वनिप्, नकारस्याकारः, सवर्णदीर्घः । विजावन् शब्दस्य प्रथमैकवचने रूपम् ।

(५) प्रपूर्वाद् अन् धातोः क्विवन्तात्संबोधनैक वचने हल्ङ्याादिलोपः, नस्य णत्वम्, नलोपस्तु न 'न ङि सम्बुद्धौ, इति निषेधात् । प्राणितीति विग्रहः ।

(६) ईत्वे रुत्वेर्वोरिति दीर्घः ।

(७) गीः, पूः इत्यत्र गॄ पॄ धातोः क्विप्, पूर्वत्र 'ऋत इदि'ति इत्वे रपरत्वे, उत्तरत्र 'उदोष्ठ्यपूर्वस्ये'ति ॠत उत्वे रपरत्वे उभयत्र सुलोपे उपधादीर्घे रूपद्वयम् ।

**स्थः क च ३।२।७७**

चात्क्विप् । संस्थः (१)। संस्थाः ।

**सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८**

अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी । शीतभोजी ।

**मनः ३।२।८२**

सुपि मन्यतेर्णिनिः । दर्शनीयमानी ।

**आत्ममाने खश् च ३।२।७७**

स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितम्मन्यः । पण्डितमानी ।

**इच एकाचोऽम्प्रत्ययवच्च ६।३।६८**

इजन्तादेकाचोऽम्स्यात् स च स्वाद्यम्वत् खिदन्ते परे ।

'औतोम्शसोः' गाम्मन्यः । 'वाऽम्शसोः' स्त्रियम्मन्यः । स्त्रीम्मन्यः । नृ–नरम्मन्यः । भुवम्मन्यः । श्रियमात्मानं मन्यते श्रिमन्यं कुलम् । भाष्यकारप्रयोगाच्छ्रीशब्दस्य ह्रस्वो मुममोरभावश्च ।

**भूते ३।२।८४**

अधिकारोऽयं वर्तमाने लडिति यावत् ।

**करणे यजः ३।२।८५**

करणे उपपदे भूतार्थाद्यजेर्णिनिः कर्तरि । सोमेनेष्टवान् सोमयाजी ।

**कर्मणि हनः ३।२।८५**

पितृव्यघाती ।

**ब्रह्म–भ्रूण–वृत्रेषु क्विप् ३।२।८७**

ब्रह्महा । भ्रूणहा । वृत्रहा । क्विप् चेत्येव सिद्धे ब्रह्मादिष्वेव क्विबेवेति द्विविध नियमार्थमिदम् । एवमग्रेऽपि ।

**सु–कर्म–पाप–मन्त्र–पुण्येषु कृञः ३।२।८९**

सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् ।

---

(१) संपूर्वकात् स्थाधातो क प्रत्यये आतो लोपः, संस्थः । क्विप् प्रत्यये संस्थाः = सुखं स्थापयतीत्यर्थः । अन्तर्भावितण्यर्थोऽत्र स्था धातुः । संस्था इति भाष्यप्रयोगाद् घुमास्थेति ईत्वं न ।

**सोमे सुञः ३।२।९०**

सोमसुत् ।

**अग्नौ चेः ३।२।९१**

अग्निचित् ।

**कर्मण्यग्न्याख्यायाम् ३।२।९२**

कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप् । अग्न्याधार स्थल विशेषस्याख्यायाम् । श्येन इव चितः श्येन चित् ।

**कर्मणीनिर्विक्रियः ३।२।९३**

कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः । (**कुत्सितग्रहणं कर्तव्यम्**) सोमविक्रयी । घृतविक्रयी ।

**दृशेः क्वनिप् ३।२।९४**

कर्मणि भूते । पारंदृष्टवान् पारदृश्वा ।

**राजनि युधि कृञः ३।२।९५**

क्वनिप् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान्–राजयुध्वा । राजकृ

**सहे च ३।२।९६**

सहयुध्वा । सहकृत्वा ।

**सप्तम्यां जनेर्डः ३।३।९७**

**तत्पुरुषे कृति बहुलम् ६।३।१४**

ङेरलुक् । सरसिजम् । सरोजम् ।

**उपसर्गे च संज्ञायाम् ३।२।९९**

प्रजाः (१) ।

**अनौ कर्मणि ३।२।१००**

अनुपूर्वाज्जनेः कर्मण्युपपदे डः । पुमांसमनुरुध्यजाता प्रमनुजा (२) ।

**अन्येष्वपि(३) दृश्यते ३।२।१०१**

अजः । द्विजः । ब्राह्मणजः । अपिशब्दः सर्वोपाधिव्यभिचारार्थः, तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित् । परितः खाता परिखा ।

---

(१) प्रजायन्तेस्म इति प्रजाः । 'प्रजास्यात् सन्ततौ जने' इत्यमरः । डप्रत्यये टिलोपे सिद्धिः ।

(२) (पुम्स्–अनु–जन्–+डः) पूर्वपदे सकारस्य संयोगान्तत्वेन लोपः, स्त्रीत्वे टाप् ।

(३) अन्येष्वप्युपपदेषु जनेर्ड प्रत्ययः स्यादित्यर्थः ।

## पञ्चम्यामजातौ ३।२।९८

जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः । संस्कारजः । अदृष्टजः ।

## क्त–क्तवतू निष्ठा १।१।२६

एतौ निष्ठासंज्ञौ स्तः ।

## निष्ठा ३।२।१०२

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र तयोरेवेति भावकर्मणोः क्तः । कर्तरिकृदिति कर्तरि क्तवतुः । स्नातं मया । स्तुतस्त्वया(१) विष्णुः (२) । विश्वं कृतवान(३) ।

## अदो जग्धिर्ल्यप्ति किति २।४।३६

ल्यपि तादौ किति च । इकार उच्चारणार्थः । जग्धम् ।

## निष्ठायामण्यदर्थे ६।४।६०

ण्यदर्थो भावकर्मणी ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात् ।

## क्षियो दीर्घात् ८।२।४६

निष्ठातस्य नः । क्षीणवान् । भावकर्मणोस्तु–क्षितः कामो मया । (**ऊर्णोतेर्णुवद्भावो वाच्यः**) तेन एकाच्त्वान्नेट् । ऊर्णुतः ।

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८।२।४२

रदाभ्यां परस्य निष्ठा तस्य नो निष्ठापेक्षया पूर्वस्य धातोर्दस्य च । शृ–शीर्णः । भिन्नः । छिन्नः ।

## संयोगादेरातो धातोर्यण्वतः ८।२।४३

यण्वत्संयोगादेरादन्तान्निष्ठा तस्य नः । द्राणः । ग्लानः ।

---

(१) भावे प्रत्यये कर्तुरनुक्तत्वान्मयेति तृतीया । अकर्मकाद् धातोर्भावे **क्तप्रत्ययस्तदन्तस्य** चौत्सर्गिकमेकवचनं क्लीवत्वं च ।

(२) सकर्मकाद् धातोः कर्मणि क्तप्रत्ययः । कर्मणोऽनुक्तत्वाभावान्न द्वितीया, किन्तु प्रातिपदिकार्थमात्रे प्रथमा, कर्तुश्च तृतीया । क्तप्रत्यये उदाहरणान्तराणि यथा–कृष्णेन नन्दगृहे स्थितम् । बालकेन शय्यायां शयितम् । त्वया चिरकालं काश्यामुषितम् । रामेण बाली हतः । त्वया सुष्ठु कार्यं कृतम् । वानरेण जम्बूफलं भक्षितम् । त्वया किमधीतम् ? मया व्याकरणमधीतम् ।

(३) कर्तरि क्तवतुप्रत्ययो भवति । सकर्मकाद् कर्तरि क्तवतुप्रत्यये कर्ता **प्रथमान्तः, कर्म** द्वितीयान्तम्, क्रियापदं कर्तानुसारि भवति यथा–रामो बालिनं हतवान् । **पुत्री मातरं** दृष्टवती इत्यादि ।

**ल्वादिभ्यः ८।२।४४**

एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः । **ज्या—ग्रहि ज्या ।**

**हलः ६।४।२**

अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्याङ्गस्य दीर्घः । जीनः । **(दुग्वोर्दीर्घश्च)** **दु गतौ ।** दूनः । **गु पुरीषोत्सर्गे ।** गूनः । **(पूञो विनाशे ।)** पूना यवाः । विनष्टा इत्यर्थः । पूतमन्यत् । **(सिनोतेर्ग्रासकर्मकर्तृकस्य)** सिनो ग्रासः । ग्रासेति किम् ? सिता पाशेन सूकरी । कर्मकर्तृकेति किम् ? सितो ग्रासो देवदत्तेन ।

**ओदितश्च ८।२।४५**

प्राग्वत् । **भुजो—**भुग्नः । **टुओश्वि—**शूनः ।

**द्रवमूर्तिस्पर्शयोः श्यः ६।१।२४**

द्रवस्य मूर्तौ—काठिन्ये स्पर्शे चार्थे श्यैङः सम्प्रसारणं स्यान्निष्ठायाम् ।

**श्योऽस्पर्शे ८।२।४७**

श्यैङो निष्ठातस्य नःस्या दस्पर्शेऽर्थे । शीनं घृतम् । अस्पर्शे किम् ? शीतं जलम् । द्रवमूर्तिस्पर्शयोरिति किम् ? संश्यानो वृश्चिकः । शीतात्संकुचित इत्यर्थः ।

**प्रतेश्च ६।१।२५**

प्रतेश्च परस्य श्यैङः सम्प्रसारणं स्यान्निष्ठायाम् । प्रतिशीनः ।

**विभाषाऽभ्यवपूर्वस्य ६।१।२६**

अभ्यवपूर्वस्य श्यः सम्प्रसारणं वा स्यात् । अभिश्यान घृतम् । अभिशीनम् । अवश्यानः, अवशीनो वृश्चिकः । व्यवस्थित विभाषेयम् । तेनेह न—समवश्यानः ।

**अञ्चोऽनपादाने ८।२।४८**

निष्ठातस्य नः ।

**यस्य विभाषा ७।२।१५**

यस्य क्वचि द्विभाषयेड् विहित स्ततो निष्ठायामिण्न । उदितोवेति क्त्वायां वेट्त्वा दिह नेट् । समक्नः (१) । अनपादाने किम् ? उदक्तमुदकं कूपात् ।

---

(१) सम्पूर्वादञ्चतेः क्ते 'यस्य विभाषा' इतीण्निषेधे, अनिदितामिति नलोपः, नत्वम्, तस्यासिद्धत्वात्कुत्वम् । संगत इत्यर्थः ।

**दिवोऽविजिगीषायाम् (१) ८।२।४९**

द्युनः (२) । विजिगीषायां तु– द्युतम् ।

**निर्वाणोऽवाते ८।२।५०**

अवात इतिच्छेदः निपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्ता न । निर्वाणोऽग्निर्मुनिर्वा (३) वाते तु निर्वातो वातः ।

**शुषः कः ८।२।५१**

निष्ठातस्य कः । शुष्कः ।

**पचो वः ८।२।५२**

पक्वः ।

**क्षायो मः ८।२।५३**

क्षामः ।

**स्त्यः प्रपूर्वस्य ६।१।२३**

प्रात्स्त्यः सम्प्रसारणं स्यान्निष्ठायाम् ।

**प्रस्त्योऽन्यतरस्याम् ८।२।५४**

निष्ठातस्य मो वा । प्रस्तीमः । प्रस्तीतः । प्रात्किम् ? स्त्यानः ।

**अनुपसर्गात्फुल्ल–क्षीब–कृशोल्लाघाः ८।२।५५**

एते निपात्यन्ते । ञिफला=फुल्लः । निष्ठा तस्य लत्वं निपात्यते । क्तवत्वेकदेशस्यापीदं निपातनमिष्यते । फुल्लवान् । अनुपसर्गात्किम् ?

**आदितश्च ७।२।१६**

आकारेतो निष्ठाया इण्न ।

**ति च ७।४।८९**

चरफलोरत उत् तादौ किति । प्रफुल्तः । प्रक्षीवितः । प्रकृशितः । प्रोल्लाघितः । (उत्फुल्ल – संफुल्लयोरुपसंख्यानम्)

**ढ–विदोन्द–त्रा–घ्रा–ह्रीभ्योऽन्यतरस्याम् ८।३।५६**

निष्कातस्य नो वा स्यात् । नुन्नः । नुत्तः । विन्नः । वित्तः । उन्दी

(१) दिवः परस्य निष्ठातस्य नः स्यादविजिगीषायाम्– इति वृत्तिः ।

(२) 'च्छ्वो'र' त्यूठ् ।

(३) निर्वाणोऽग्निः = विनष्टः । निर्वाणो मुनिः = मृत इत्यर्थः ।

**श्वीदितो निष्ठायाम् ७।२।१४**

श्वयतेरीदितश्च निष्ठाया इण्न। उन्नः। उत्तः। इत्यादि।

**न ध्या–ख्या–पॄ–मूर्च्छि–मदाम् ८।२।५७**

एभ्यो निष्ठातस्य नो न। ध्यातः। ख्यातः। पूर्तः।

**राल्लोपः ६।४।२१**

राच्छ्वोर्लोपः स्यात् क्वौ, झलादावनुनासिकादौ च प्रत्यये। मूर्त्तः। मत्तः।

**वित्तो–भोगप्रत्यययोः ८।२।५८**

विन्दतेर्निष्ठान्तस्य निपातोऽयं भोग्ये प्रतीते चार्थे। वित्तं(१) धनम्। वित्तः (२) पुरुषः। अनयोः किम्? विन्नः।

**भित्तं शकलम् (३) ८।२।५९**

भिन्नमन्यत्।

**ऋणमाधमर्ण्ये (४) ८।२।६०**

ऋतमन्यत्।

**स्फायः स्फी निष्ठायाम् ६।१।२२**

स्फीतः (५)।

**इण्निष्ठायाम् ७।२।४७**

निरः कुषो(६) निष्ठाया इट्। यस्य विभाषेति निषेधे प्राप्ते पुनर्विधिः। निष्कुषितः।

**वसतिक्षुधोरिट् ७।२।५२**

आभ्यां क्त्वानिष्ठयोर्नित्यमिट्। उषितः। क्षुधितः।

---

(१) भोग्यमित्यर्थः।

(२) प्रसिद्ध इत्यर्थः।

(३) शकले=खण्डे वाच्ये भिदेः क्तस्य नत्वाभावो निपात्यत इत्यर्थः।

(४) ऋणेऽधमः = अधमर्णः। यद्वा अधमं दुःखप्रदं ऋणं यस्य सोऽधमर्णः, तस्य भाव, आधमर्ण्यम्=व्यवहारविशेषस्तस्मिन्निषये ऋधातोः क्तप्रत्यये ऋणमिति निपात्यते (अप्राप्तस्य नत्वस्य निपातनम्।)

(५) स्फायी वृद्धौ इत्यस्मात् क्तप्रत्यये 'श्वीदित, इतीण्निषेधे स्फीतः इति रूपम्।

(६) निरः कुष इत्यनुवर्तते।

**अञ्चेः पूजायाम् ७।२।५३**

क्त्वानिष्ठयोरिट्। अञ्चितः। गतौ तु अक्तः।

**लुभोऽविमोहने (१) ७।१।५४**

क्त्वानिष्ठयोरिट् नतु गार्ध्ये। लुभितः। गार्ध्येतु लुब्धः (२)।

**क्लिशः क्त्वानिष्ठयोः (३) ७।२।५०**

इड्वा। क्लिशितः। क्लिष्टः।

**पूङश्च (४) ७।२।५१**

क्त्वानिष्ठयो रिड् वा।

**पूङः क्त्वाच १।२।२२**

निष्ठाया सेट् किन्न स्यात्। पवितः। पूतः। क्त्वाग्रहण मुत्तरार्थम् (५)। नोपधा दित्यत्र हि क्त्वैव सम्बध्यते।

**निष्ठा शीङ –स्विदि–मिदि–क्ष्विदि–धृषः १।२।१९**

सेट् किन्न। शयितः। (**आदिकर्मणि (६) निष्ठा वक्तव्या**)

**आदिकर्मणि क्तः कर्तरि च ३।४।७१**

चाद्भावकर्मणोः।

**विभाषा भावादिकर्मणोः ७।२।१७**

आदितो निष्ठाया इड् वा। प्रस्वेदित श्चैत्रः(७)। प्रस्वेदितं तेन। ञिष्विदेति ञ्वादि रत्र

---

(१) तीषसहलुभेति विकल्पात् निष्ठायां यस्य विभाषेति निषेधे प्राप्ते वचनमिदम्।

(२) इडभावे, झषस्तथयोरिति तकारस्य धत्वे जस्त्वम्।

(३) 'स्वरति सूति' इत्यतो वेत्यनुवर्तते। क्लिश उपतापे इत्यस्य नित्यं प्राप्ते, क्लिशू विबाधने इत्यस्य ऊदित्वाद् विकल्पे निष्ठायां यस्य विभाषेति निषेधे प्राप्ते विकल्पार्थोऽय मारम्भः।

(४) श्र्युकः किति' इति निषेधे प्राप्ते विकल्पोऽयम्।

(५) नोपधादित्यत्र सूत्रेऽनुवृत्यर्थमित्यर्थः।

(६) यत्र दीर्घकालव्यापिनी क्रिया तत्रा द्येषु क्रियाक्षणेषु भूतेष्वपि सर्वस्याः क्रियाया भूतत्वा भावाद् भूते विहिता निष्ठा न प्राप्नोतीति तदर्थ मिदमारभ्यते।

(७) चैत्र कर्तृका आरभ्यमाण प्रस्वेदन क्रियेत्यर्थः।

गृहधते। ञीद्भिः साहचर्यात्। स्विद्यते स्तु–स्विदित इत्येव। ञिमिदा ञिक्ष्विदा दिवादी भ्वादी च। प्रमेदितः प्रक्ष्वेदितः। प्रधर्षितः। धर्षितं तेन ।

सेट् किम् ? प्रस्विन्नः। प्रस्विन्नं तेनेत्यादि ।

**मृषः स्तितिक्षायाम् १।२।२०**

सेण् निष्ठा किन्न। मर्षितः। क्षमायां किम् ? अपमृषितं वाक्यम्। अविस्पष्ट मित्यर्थः।

**उदुपधाद्भावादिकर्मणोरन्यतरस्याम् १।२।२१**

उदुपधात्परा भावादिकर्मणोः सेण् निष्ठा वा किन्न। द्युतितम्। द्योतितम्। मुदितम्, मोदितं साधुना। प्रद्योतितः। प्रद्युतितः। प्रमुदितः। प्रमोदितः साधुः। उदुपधात्किम् ? विदितम्। भावेत्यादि किम् ? रुचितं कार्षापणम्। सेट् किम् ? कुष्टम्। शब्विकरणे भ्य एवेष्यते। नेह गुध्यतेर्गुधितम्।

**निष्ठायां सेटि ६।४।५२**

णेर्लोपः। भावितः। भावितवान्।

**दृढः स्थूलबलयोः (१) ७।२।२०**

स्थूल्ये बलवति च निपात्यते।

**दधातेर्हि ७।४।४२**

तादौ किति। हितम्।

**दोदद्घोः ७।४।४६**

घुसंज्ञस्य दा इत्यस्य दथ् तादौ किति। चर्त्वम्। दत्तः।

**गत्यर्थाकर्मक-श्लिष-शीङ-स्थास-वस-जन-रुह जीर्यतिभ्यश्च ३।४।७२**

एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च। गङ्गां प्राप्तः। ग्लानः सः। लक्ष्मीमाश्लिष्टो हरिः। शेष मधिशयितः।

**द्यति–स्यति–मास्था मित्ति किति ७।४।४०**

एषामित्स्यात्तादौ किति। वैकुण्ठमधिष्ठितः। शिवमुपासितः। हरिदिनमुपोषितः (२) राममनुजातः। गरुडमारूढः(३) विश्वमनुजीर्णः। पक्षे प्राप्ता गङ्गा तेनेत्यादि।

---

(१) बलशब्दः अर्शआद्यजन्तो वलवत्परः। 'दृह दृहि वृद्धौ' इत्याभ्यां क्त प्रत्ययः, इडभावः निष्ठातस्य ढत्वं, हकारस्य लोपश्च निपात्यते। इदितो नलोपश्चापि–दृढः।

(२) उपोषितः– वसेः क्त प्रत्यये यजादित्वात्संप्रसारणम्। 'वसति क्षुधोरिट्'। शासिवसीति षः। हरिदिने स भुक्तवानित्यर्थः।

(३) उपर्याक्रान्तवानित्यर्थः। अरुह्+क्तः, हस्यढत्वं, तकारस्य धत्वे, ढत्वे, ढलोपे, दीर्घः–आरूढः

**क्तोऽधिकरणे च ध्रौव्य-गति-प्रत्यवसानार्थेभ्यः ३।४।७६**

एभ्योऽधिकरणे क्तः । चाद्यथाप्तम् ।

(१) **मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।**
**भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥**

पक्षे आसेरकर्मकत्वात्कर्तरि भावे च । आसितो मुकुन्दः । आसितं तेन । गत्यर्थेभ्यः कर्तरि कर्मणि च- रमापतिरिदं यातः ।

तेनेदं यातम् । भुजेः कर्मणि- अनन्तेनेदं भुक्तम् । वर्तमाने इत्यधिकृत्य ।

**ञीतः क्तः (२) ३।२।१८७**

क्ष्विण्णः ।

**मति-बुद्धि-पूजार्थेभ्यश्च (३) ३।२।१८८**

राज्ञां मतः । इष्टः (४) । बुद्धः । विदितः । पूजितः । अर्चितः । चकारोऽनुक्त समुच्चयार्थः। "शीलितः, रक्षितः, क्षान्तः, आक्रुष्टो जुष्ट इत्यपि (५) " इत्यादि ।

**नपुंसके भावे क्तः ३।३।११४**

क्लीबत्वविशेष्टे भावे कालसामान्ये क्तः स्यात् । जल्पितम् । हसितम् ।

**सुयजोर्ङ्वनिप् ३।२।१०३**

भूते । सुत्वा । यज्वा ।

**जीर्यते रतृन् ३।२।१०४**

जरन् । जरन्तौ । वासरूपन्यायेन निष्ठापि । जीर्णः । जीर्णवान् ।

---

(१) इदम्= पुरोदृश्यमानं मुकुन्दस्य= भगवतः श्रीकृष्णचन्द्रस्य आसितम्= आस्यतेऽस्मिन्नित्यासनस्थानमित्यर्थः । ध्रौव्योदाहरणमिदम् । इदं च रमापतेः = श्रीकृष्णस्य यातम् = यायते गम्यतेऽत्रेति यातम्=मार्गः, गत्यर्थोदाहरणमिदम् । एतत् अनन्तस्य=श्रीकृष्णस्य भुक्तम्=भुज्यतेऽस्मिन्निति भुक्तम् = भोजनस्थानमित्यर्थः । प्रत्यवसानो (भक्षणम्) दाहरणमिदम् । दिदृक्षवः = दर्शनाभिलाषिण्योऽन्वेषमाणा गोप्य इति = पूर्वोक्तम् ऊचुः इति ।

(२) 'ञि' इत् यस्य तस्माद् वर्तमानक्रियावृत्तेर्धातोः क्तप्रत्ययः स्यादित्यर्थः । यथा ञिक्ष्विदा इत्यस्य क्ष्विण्णः । आदितश्चेति नेट् । रदाभ्यामिति तकारस्य दकारस्य च नत्वे, णत्वम् ।

(३) वर्तमाने क्त इतिशेषः । मतिरिहेच्छा । बुद्धेः पृथगुपादानात् ।

(४) तीषसहेति वेट्कत्वाद् यस्य विभाषेति इण्निषेधः, ष्टुत्वम्- इष्टः ।

(५) भाष्यश्लोकोऽयम् ।

**छन्दसि लिट् ३।२।१०५**

**लिटः कानज्वा ३।२।१०६**

**क्वसुश्च ३।२।१०७**

भूतसामान्ये छन्दसि लिट्, तस्य कानच्क्वसू वा स्तः । तङानावात्मनेपदम् । चक्राणः (१) । 'म्वोश्च' । जगन्वान् (२) । कवयस्तु बाहुलकाल्लोकेऽपि प्रयुञ्जते । 'तं (३) तस्थिवांसं नगरोपकण्ठे' । 'श्रेयांसि सर्वाण्यधिजग्मुष (४) स्ते' इत्यादि ।

**वस्वेकाजाद्घसाम् ७।२।६७**

कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसो रिटस्यान्नान्येषाम् । आदिवान् । आरिवान् । ददिवान् । जक्षिवान् । एषां किम् ? बभूवान् ।

**भाषायां सद-वस-श्रुवः ३।२।१०८**

सदादिभ्यो भूतसामान्ये भाषायां लिड् वा स्यात् तस्य च नित्यं क्वसुः । 'निषेदुषी मासनबन्ध धीरः । 'अध्यूषुषस्तामभवज्जनस्य' शुश्रुवान् ।

**उपेयिवाननाश्वाननूचानश्च ३।२।१०९**

एते निपात्यन्ते। उपादिणो लिड्वा तस्य क्वसुः, इट्। उपेयिवान्। नात्रोपसर्ग स्तन्त्रम्। ईयिवान् । नञोऽश्नातेः क्वसोरिडभावश्च, अनाश्वान् । अनोर्वचेः कर्तरि कानच्, वेदस्यानुवचनं कृतवा ननूचानः (५) ।

**लटः शतृशानचावप्रथमासमानाधिकरणे ३।२।१२४**

अप्रथमान्तेन सामानाधिकरण्ये लट एतौ वा स्तः । शबादिः । पचन्तं चैत्रं पश्य।

---

(१) कृधातोर्लिटः कानच्, द्वित्वेऽभ्यासकार्ये यणि– चक्राणः ।

(२) गम्धातोर्लिटः क्वसुः, द्वित्वे म्वोश्चेति मस्य नत्वे जगन्वस् शब्दस्य प्रथमायां नुमि दीर्घे जगन्वान् ।

(३) स्था धातोर्लिटः क्वसुः, द्वित्वादौ 'वस्वेकाजाद्घसा'मितिवसोरिट् । तस्थिवस् शब्दस्य प्रथमायां नुमादौ तस्थिवान्, तस्थिवांसौ, तस्थिवांसः इत्यादि । शशि–वसोः 'इति सम्प्रसारणे तस्थुषः इति ।

(४) अधिपूर्वकाद् गम् धातोर्लिटः क्वसुः अधिजगन्वान् इत्यादि। शसि ङसि च अधिजग्मुषः, गमहनेत्युपधालोपः, वसोः सम्प्रसारणे पूर्वरूपम्, षत्वम् ।

(५) अनुवच्+कानच्, किस्वात्सम्प्रसारणम्, पूर्वरूपम्, सवर्णदीर्घः अनूचानः ।

**आने मुक् ७।२।८२**

अङ्गस्यातः। पचमानं चैत्रं पश्य। लडित्यनुवर्तमाने पुनर्लड् ग्रहणात् प्रथमासामानाधिकरण्येऽपि क्वचित्। सन् द्विजः।

**ईदासः ७।२।८३**

आनस्य। 'आदेः परस्य'। आसीनः।

**विदेः शतुर्वसुः ७।१।३६**

वेत्तेः परस्य शतुर्वसुरादेशो वा। विद्वान् (१)। विदन्।

**तौ सत् ३।२।१२७**

तौ शतृशानचौ सत्संज्ञौ स्तः।

**लृटः सद्वा ३।३।१४**

करिष्यन्तं करिष्यमाणं वा पश्य।

**ताच्छील्य–वयोवचन–शक्तिषु चानश् ३।२।१२९**

अग्नौ जुह्वानः। कवचं बिभ्राणः। शत्रुं निघ्नानः। (२)

**आक्वे स्तच्छील–तद्धर्म–तत्साधुकारिषु ३।२।१३४**

क्विपमभिव्याप्य वक्ष्यमाणा स्तच्छीलादिषु कर्तृषु बोध्याः।

**तृन् (३) ३।२।१३५**

कर्ता कटान्।

---

(१) विद्वान् इत्यत्र 'विद् ज्ञाने' इत्यस्मात् लटः 'शतृ' आदेशे तस्य विकल्पेन 'वसु' प्रत्यये विद्वस् शब्दः सिध्यति। कृत्तद्धितेति प्रातिपदिकत्वात् स्वादयः उगित्वान्नुम्, 'सान्तमहत' इति दीर्घः, संयोगान्तत्वेन सलोपः विद्वान्, विद्वांसौ इत्यादि। शसि, वसोः सम्प्रसारणे, पूर्वरूपे विदुषः। भ्यामादौ 'वसु–स्रंस्विति, दत्वम्। पक्षे शत्रन्तत्वे विदन् विदन्तौ इत्यादि' उगित्वान्नुम्, तकारस्य संयोगान्तलोपः।

(२) चानशो ल्यादेशत्वाभावान्नात्मनेपदत्वम्, तेन परस्मैपदिभ्यो ऽपि धातुभ्यो भवति चानश् तथोदाहरति–निघ्नानः (नि–हन्+चानश्) शचावितौ, अदादित्वेन शपोलुक्, सार्वधातुकमपि दिति ङित्वेन गमहनेत्युपधालोपे, होहन्ते रिति हस्य घत्वे रूपम्। 'आन' इत्यस्याऽतः परत्वा भावान्न मुक्, निहन्तुं शक्त इत्यर्थः।

(३) धातोः तृन् प्रत्ययः स्यात्तच्छीलादिषु कर्तृषु इत्यर्थः। करोति तच्छीलः कर्ता। कटान् इति कर्म, तत्र कर्तृकर्मणोरिति प्राप्ता षष्ठी नलोकेति निषिध्यते।

**स्पृहि–गृहि–पति–दयि–निद्रा–तन्द्रा–श्रद्धाभ्य आलुच् ३।२।१५८**

आद्या स्त्रय श्चुरादा वदन्ताः। स्पृहयालुः (शीङो वाच्यः) शयालुः ।

**अलंकृञ्–निराकृञ्–प्रजनोत्पचोत्पतोन्मद – रुच्यपत्रप – वृतु – वृधु – सह–चर इष्णुच् ३।२।१३६**

अलङ्करिष्णुः ।

**ग्ला–जि–स्थश्च ग्स्नुः ३।२।१३९**

गिदयं नतु कित् । तेन स्थ ईत्वं न । ग्लास्नुः । गित्वान्न गुणः । जिष्णुः स्थास्नुः । चाद्भूवः । श्र्युकः कितीत्यत्र गकारप्रश्लेषा न्नेट् । भूष्णुः ।

**त्रसि–गृधि–धृषि–क्षिपेः क्नुः ३।२।१४०**

त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ।

**शमित्यष्टाभ्यो घिनुण् ३।२।१४१**

उकार उच्चारणार्थ इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिनितरा शमिनीतरे त्यत्र उगितश्चेति ह्रस्वविकल्पः । न चैवं शमी शमिना वित्यादौ नुम्प्रसङ्गः । झल्ग्रहण मपकृष्य झलन्तानामेव तद्विधानात् । नोदात्तोपदेशस्येति वृद्धिनिषेधः । शमी । तमीत्यादि ।

**संपृचा नुरुधाङय माङ्यस–परिसृ–संसृज–परिदेवि–संज्वर–परिक्षिप–परिरट–परिवद–परिदह–परिमुह–दुष–द्विष–द्रुह–दुह–युजाक्रीड–विविच – त्यज – रज–भजातिचरापचरामुषा भ्याहन श्च ३।२।१४२**

घिनुण् स्यात् । सम्पर्कीत्यादि ।

**वौ कष–लस–कत्थ–स्रम्भः ३।२।१४३**

विकाषी ।

**अपे च लषः ३।२।१४४**

चाद्वौ । अपलाषी । विलाषी ।

**चलनशब्दार्था दकर्मका द्युच् ३।२।१४८**

चलनार्था च्छब्दार्था च्च (अकर्मकात्) युच् स्यात् । चलनः (१) : । चोपन (२): । कम्पनः। शब्दनः । रवण : । अकर्मकात् किम् ? पठिता विद्याम् ।

---

(१) चल कम्पने (अकर्मकः) इत्यस्मात् युच्–चलनः ।

(२) चुप् मन्दायां गतौ, चोपति तच्छीलः चोपनः ।

**अनुदात्तेतश्च हलादेः ३।२।१४९**

अकर्मका युच् । वर्तनः । वर्धनः । अनुदात्तेतः किम् ? भविता। हलादेः किम् ? एधिता। अकर्मकात् किम् ? वसिता वस्त्रम् ।

**निन्द- हिंस- क्लिश-खाद- विनाश- परिक्षिप- परिरट- परिवादि-व्याभाषा सूञोवुञ् ३।२।१४६**

एभ्यो वुञ् । निन्दकः । हिंसक इत्यादि ।

**देविक्रुशोश्चोपसर्गे ३।२।१४७**

आदेवकः । आक्रोशकः । उपसर्गे किम् ? देवयिता । क्रोष्टा ।

**लष-पत-पद-स्था-भू-वृष-हन-कम-गम-शृभ्य उकञ् ३।२।१५४**

लाषुकः । पातुकः ।

**जल्प-भिक्ष-कुट्ट-लुण्ट-वृङः षाकन् ३।२।१५५**

जल्पाकः ।

**सनाऽऽशंस-भिक्ष उः ३।२।१६८**

चिकीर्षुः । आशंसुः । भिक्षुः ।

**स्थेश-भास-पिस-कसो वरच् ३।२।१७५**

स्थावरः । इत्यादि ।

**यश्च यङः ३।२।१७६**

यातेर्यङन्ताद्वरच् । अतो लोपः । तस्या चः परस्मिन्निति स्थानिवद्भावे प्राप्त ।

**न पदान्त-द्विर्वचन-वरेयलोप-स्वर-सवर्णानुस्वार-दीर्घ- जश्चर्विधिषु १।१।५८**

पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत्। इति यलोपं प्रति स्थानिवत्व निषेधाल्लोपो व्योर्वलीति यलोपः । अल्लोपस्य स्थानिवत्वमाश्रित्याल्लोपे प्राप्ते (वरे लुप्तं न स्थानिवत्) यायावरः ।

**भ्राज-भास-धुर्वि-द्युतोर्जि-पृ-जु- ग्रावस्तुवः क्विप् ३।२।१७७**

विभ्राट् । भाः । धूः । विद्युत् । ऊर्क् । पूः । दृशि ग्रहणस्यापकर्षणाज्जवतेर्दीर्घः । जूः । ग्रावस्तुत् । (क्विब्वचि- प्रच्छ्यायतस्तु - कटप्रु-जु-श्रीणां दीर्घोऽसम्प्रसारणं च) वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । जू रक्तः । श्रयति हरिं श्रीः । ध्यायतेः सम्प्रसारणं च। धीः ।

**दाम्नी–शस–यु–युज–स्तु–तुद–सि–सिच–मिह्–पत–दश–नहः करणे ३।२।१८२**

दाबादेः ष्ट्रन् करणेऽर्थे । दान्त्यनेन दात्रम् । नेत्रम् ।

**ति–तु–त्र–त–थ–सि–सु–सर–कसेषु च ७।२।६**

एषां दशानां कृत्प्रत्ययानामिण्न । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । नद्ध्री ।

**हलसूकरयोः पुवः ३।२।१८३**

पूङ्पूञोः करणे ष्ट्रन् । तच्चेत्करणं हलसूकरयोरवयवः । हलस्य सूकरस्य वा पोत्रं मुखमित्यर्थः ।

**अर्ति–लू–धू–सू–खन–सह–चर इत्रः ३।२।१८४**

अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ।

**पुवः संज्ञायाम् ३।२।१८५**

पवित्रम् ।

## ॥ इति पूर्वकृदन्ताः ॥

### अभ्यासः

(१) नन्दि–ग्रहि–पचादिभ्यो ल्युणिन्यचः– नन्द्यादेर्ल्युः, ग्रह्यादेर्णिनिः, पचादेरच् स्यात् । उदाहरणं यथा ल्युप्रत्यये– नन्दयतीति नन्दनः (नन्दि + ल्यु + अन) एवं जनार्दनः, लवण इत्यादि । णिनिप्रत्यये यथा गृह्णतीति ग्रह् धातोर्णिनिप्रत्यये उपधावृद्धौ ग्राही, एवं स्थायी, मन्त्री इत्यादि । अच्प्रत्यये यथा पचतीति पच् धातोरच्प्रत्यये पचः, इति रूपं ज्ञेयम् ।

(२) ददः इत्यत्र ददातीति विग्रहे दा धातोः 'ददातिदधात्योर्विभाषा' इति वैकल्पिकशप्रत्यये शपः जुहोत्यादिभ्यः श्लौ इति श्लौ 'श्लौ' इति द्वित्वेऽभ्यासादिकार्ये आतो लोप इत्याकारलोपे ददः, इति रूपं सिध्यति । शप्रत्ययाभावे दा धातोः 'श्याद् व्यधास्रु.... इत्यादिसूत्रेण णप्रत्यये युगागमे दायः, इति रूपं सिध्यति ।

(३) महीं धरतीति महीध्रः इत्यत्र "मूल विभुजादिभ्यः कः" इति वार्तिकेन कप्रत्ययः, कित्वाद् गुणाभावे यणि रूपं सिध्यति ।

(४) मुकुन्दस्यासितमिदमिति श्लोके आसितमित्यत्र आस्यतेऽस्मिन्निति विग्रहे 'क्तोऽधिकरणे च ध्रौव्यगति–प्रत्यवसानार्थेभ्यः' इति सूत्रेण आस् धातोर्ध्रौव्येऽर्थे क्तप्रत्यये आसितम् = आसन-स्थानम् । यातमित्यत्र यायते गम्यतेऽत्रेति विग्रहे याधातोर्गत्यर्थे पूर्वोक्तसूत्रेण क्तप्रत्यये रूपम्, यातम् = मार्ग इत्यर्थः । भुक्तमित्यत्र भुज्यतेऽस्मिन्निति विग्रहे भुज्धातोरुक्तसूत्रेण प्रत्यवसानार्थे (प्रत्यवसानम् = भक्षणम्) क्तप्रत्यये रूपम्, भुक्तम् = भोजनस्थानमित्यर्थः ।

(५) विहायस्–गम्+डः= विहगः। काम– दुह्+कप्= कामदुघा । सुष्ठु कृतवानिति सु–कृ+क्विप्=सुकृत्। गम्+क्वसुः= जगन्वान् इत्यादि।

## अभ्यासार्थं प्रश्नाः

(१) "नन्दि–ग्रहि–पचादिभ्यो ल्युणिन्यचः" इत्यस्यार्थं प्रदर्श्योदाहरणानि देयानि ।

(२) ददः, ग्राहः, इत्यत्र सूत्रोल्लेखपुरःसरं धातुप्रत्ययौ निर्दिश्य वैकल्पिक पक्ष – श्चोल्लेखनीयः ।

(३) **अधोनिर्दिष्ट प्रयोगाः ससूत्रं प्रत्ययप्रदर्शनेन साध्याः**

ज्ञः, पश्यः, कुम्भकारः, सामगः, कवचहरः कुमारः ।

(४) महीं धरतीति महीध्रः इत्यत्र केन सूत्रेण कःप्रत्ययो भवति ?

(५) दिवा–विभेति सूत्रं पूरयित्वा, उदाहरणद्वयं देयम् ।

(६) "नृति खनि रञ्जिभ्य एव" इति वार्तिकस्यार्थोदाहरणे लेख्ये ।

(७) नखम्पचा यवागूः इति प्रयोगः कस्योदाहरणमिति प्रदर्श्यताम् ।

(८) उरसा गच्छतीति– उरगः इति प्रयोगः सूत्रवार्तिकनिर्देशपूर्वकं साध्यताम् ।

(९) मेघङ्करः, क्षेमङ्करः इति प्रयोगौ साध्यौ ।

(१०) "सुप्यजातौ णिनिस्ताच्छील्ये" इत्यस्योदाहरणं दर्शयत ।

(११) पण्डितम्मन्यः इति प्रयोगः सविग्रहं साध्यः ।

(१२) दृशेः क्वनिप् इत्यस्यार्थं विलिख्योदाहरणं च देयम् ।

(१३) संस्कारजः इत्यत्र केन सूत्रेण कः प्रत्ययो भवति ?

(१४) कर्मणि क्तप्रत्यये रूपद्वयं प्रदर्श्य वाक्ये प्रयुज्यताम् ।

(१५) भिन्नमित्यत्र केन निष्ठातस्य नत्वं विधीयते ?

(१६) भज् धातोः, पच् धातोश्च क्तप्रत्यये रूपं दर्शयत ।

(१७) उषितः, क्लिशितः इति रूपद्वयं धातुप्रत्ययनिर्देशनपूर्वकं ससूत्रं साध्यताम् ।

(१८) दोदद्घोरित्यस्योदाहरणं प्रदर्श्यताम् ।

(१९) कर्तरि क्तप्रत्ययो भवति न वा ? भवति चेत्सूत्रं प्रदर्श्य उदाहरण द्वयं वाक्ये प्रयुज्यताम् ।

(२०) **मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।**
**भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥**

श्लोकेऽस्मिन् आसितं, यातं, भुक्तमित्यत्र कस्मिन्नर्थे क्तप्रत्ययः ? ससूत्रं विग्रहश्च प्रदर्श्यताम् ।

(२१) नपुंसके भाव[illegible] क्तः इत्यस्योदाहरणं दीयताम् ।

(२२) अनूचानः इत्यस्य साधुत्वं प्रदर्शयत ।

(२३) विद्वान् इति धातुप्रत्ययौ प्रदर्श्यससूत्रं साध्यताम् ।

(२४) शत्रुं निघ्नानः इत्यत्र निघ्नान इति कथं सिध्यति ?

(२५) "अलंकृञ्- निराकृञ्" इत्यादि सूत्रं समग्रं लिख्यताम् ।

(२६) निन्दकः इत्यत्र ससूत्रं प्रकृतिप्रत्ययौ दर्शनीयौ ।

(२७) केन सूत्रेण सनन्ताद्धातोः 'उ' प्रत्ययो विधीयते, उच्यताम् ।

(२८) पवित्रम् इत्यत्र सविग्रहं ससूत्रं धातुप्रत्ययौ दर्शनीयौ ।

**(२९) अधोनिर्दिष्ट धातुभ्यो निर्दिष्टप्रत्यये कृते रूपाणि लिख्यन्ताम्**

विहायस् गम् +डः। काम दुह् +कप्। सुष्ठु कृतवानिति सुकृ+क्विप्। ग्लै+क्तः। शुष्+क्तः। नुद्+क्तः। गम्+क्वसुः। आस्+शानच्। यायाय्+वरच्।

**(३०) अधो लिखितपदेषु धातुप्रत्ययौ दर्शनीयौ**

बुधः, गृहम्, ग्रंशहरः, खशयः, स्तम्बकरिर्व्रीहिः, परन्तपः, उपनिषत्, आशीः, सरसिजम्, राजयुध्वा, निर्वाणोऽग्निः। भित्तं शकलम्, बुद्धः, शयालुः, भिक्षुः, नेत्रम् ।

**(३१) अधोलिखितपदेषु शुद्धानि पदानि उद्धृत्य लिखत**

पण्डितमानी, शब्दकरः, पुरन्दरः, द्रातः, स्फातः, हितम् ।

# अथोत्तरकृदन्तम्

**उणादयो बहुलम्(१) ३।३।१**

एते वर्तमाने संज्ञायां बहुलं स्युः। केचिदविहिता (२) अप्यूह्याः।

**"सञ्ज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे (१२)।**
**कार्या द्विद्यादनूबन्धमेतच्छास्त्र मुणादिषु" ॥**

**दाशगोघ्नौ सम्प्रदाने ३।४।७३**

एतौ निपात्येते। दशन्ति अस्मै दाशः। गां हन्ति अस्मै गोघ्नः (४) =अतिथिः।

**तुमुण्वुलौ क्रियायां क्रियार्थायाम् ३।३।१०**

क्रियार्थायां क्रियायामुपपदेभविष्यदर्थे धातो रेतौ स्तः। मान्तत्वा दव्ययत्वम्। कृष्णं द्रष्टुं याति। कृष्णं दर्शको याति।

**कालसमय-वेलासु(५) तुमुन् ३।३।१६७**

कालः समयो वेला वा भोक्तुम्।

---

(१) 'वर्तमाने लट्' इत्यतः वर्तमाने, 'पुवः संज्ञायाम्' इति सूत्रात् संज्ञायामित्यनुवर्तते।

(२) बहुलग्रहणस्य प्रयोजनमाह–केचिदविहिता अप्यूह्या इति। तेन शङ्कुला इत्यत्र शङ्क् धातोरविहितोऽपि डुलच्प्रत्ययो भवति।

(३) बाहुलकत्वमेव विशदयति–सञ्ज्ञासु इति श्लोकेन। भाष्यस्थोऽयं श्लोकः। सञ्ज्ञासु=वायु-दारु–गवादिशब्देषु डित्थ डवित्थादिषु च यानि यानि धातुरूपाणि सम्भवन्ति, ते ते धातवः, ऊहनीयाः कल्पनीया इति शेषः। ततः परे=धातुभ्यः परे प्रत्ययाः=उण् जुण् डो इत्यादयः कल्पनीयाः। तेषु च कार्यात्=कार्यानुरूपमित्यर्थः। गुणवृद्धिटिलोपसम्प्रसारणादिकार्यानुसार-मिति यावत्। अनूबन्धम्=णकारककारडकारादिकं विद्यात् जानीयात्, कल्पयेत् इति यावत्। बहुलग्रहणेनैव पाणिनिना शाकटायनप्रणीतानि उणादिसूत्राणि सङ्गृहीतानीति भावः।

(४) गां=वाचम्='आगम्यताम्, आस्यताम्, स्वागतं वः, इत्यादि रूपां हन्ति=उच्चारयति गृहस्थोऽस्मै–इति गोघ्नः=अतिथिः। 'हनिः' उच्चारणार्थः=शब्दार्थः–प्रसिद्ध एव, यथा 'भेर्य आहन्यन्ते' इति।

**भावे(१) ३।३।१८**

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् । पाकः ।

**अकर्तरि च कारके सञ्ज्ञायाम् ३।३।१९**

कर्तृभिन्ने कारके घञ् ।

**घञि च भावकरणयोः ६।४।२७**

रञ्जेर्नलोपः । रागः । अनयोः किम् ? रज्यत्यस्मिन्निति रङ्गः ।

**निवास–चिति–शरीरोपसमाधानेष्वादेश्च कः ३।४।४१**

एषु चिनोतेर्घञादेश्च कः । उपसमाधानं=राशीकरणम् । निकायः । आकायः । कायः । गोमयनिकायः ।

**एरच् ३।३।५६**

इवर्णान्तादच् । चयः ।

**ऋदोरप् ३।३।५७**

ऋदन्तादुवर्णान्ता दप् । करः । गरः । शरः । यवः । स्तवः । पवः । (घञर्थे कविधानम्) प्रस्थः । विघ्नः ।

**ड्वितः(२) क्त्रिः ३।३।८८**

भावे स्वभावात् ।

**क्त्रेर्मम् नित्यम् ४।४।२०**

क्त्रिप्रत्ययान्तान्मम् निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप्–उप्त्रिमम् ।

**ट्वितोऽथुच् ३।३।८९**

अयमपि भावे । **टुवेपृ कम्पने** – वेपथुः । श्वयथुः ।

---

(१) काल समेयेति पर्याय ग्रहणम् अर्थोपलक्षणार्थम् तथा चायमर्थः कालार्थेषू पपदेषु धातोः तुमुन्निति ।भावो=धात्वर्थः, स द्विविधः साध्यावस्थापन्नः सिद्धावस्थापन्नश्च । तत्र तिङवाच्यो लिङ्गसङ्ख्याद्यन्वयाऽयोग्यः साध्यावस्थापन्नः । कृद्वाच्यस्तु 'कृदभिहितो भावो द्रव्यवत् प्रकाशते, इति लिङ्गसङ्ख्याद्यन्वययोग्यः सिद्धावस्थापन्नः, तस्मिन् सिद्धावस्थापन्ने भावे= धात्वर्थे वाच्ये घञ् स्यादितिभावः । पदरुजेति सूत्रात् घञनुवर्तते ।

(२) यस्य धातोः 'डु' इत्स्यात् तस्माद् धातोः 'क्त्रि' प्रत्ययः स्यादित्यर्थः ।

**यज–याच–यत–विच्छ–प्रच्छ–रक्षो नङ् ३।३।९०**

यज्ञः(१)। याच्ञा (२)। यत्नः। विश्नः(३)। प्रश्नः(४)। रक्षणः।

**स्वपो नन् ३।३।९१**

स्वप्नः।

**उपसर्गे घोः किः ३।३।९२**

प्रधिः। उपधिः(५)।

**स्त्रियां क्तिन् ३।३।९४**

स्त्रीलिङ्गे भावादौ क्तिन्। घञोऽपवादः। कृतिः। स्तुतिः। (**ऋल्वादिभ्यः क्तिन्निष्ठावद्वक्तव्यः**) तेन नत्वम्। कीर्णिः। गीर्णिः। धूनिः। लूनिः। पूनिः(६)। (**सम्पदादिभ्यः क्विप्**) सम्पत्। विपत्। आपत्। क्तिन्नपीष्यते। सम्पत्तिः। विपत्तिः। आपत्तिः।

**ऊति(७)–यूति–जूति–साति–हेति–कीर्तयश्च ३।३।९७**

एते निपात्याः।

**कृञः ३।३।९९**

क्यप्। कृत्या।

**श च ३।३।१००**

कृञः शः। चात् क्तिन्। प्रकरणम्=प्रक्रिया। कृतिः।

**इच्छा ३।३।१०१**

इषेर्निपातोऽयम्।

**अ प्रत्ययात् ३।३।१०२**

प्रत्ययान्तेभ्यः स्त्रिया मकारप्रत्ययः। चिकीर्षा। पुत्रकाम्या।

---

(१) नस्य श्चुत्वेन ञः, जञोर्ज्ञः।

(२) नस्य श्चुत्वेन ञः।

(३) "च्छ्वोः शूडनुनासिके च" इति शत्वम्, विश्नः=प्रतापः।

(४) नङो ङित्वेऽपि 'प्रश्ने चासन्नकाले, इति निर्देशात् 'ग्रहिज्ये'ति सम्प्रसारणं न।

(५) एवं व्याधिः, आधिः, समाधिः। विधिः इत्यादि किप्रत्ययान्ताः पुंलिङ्गाः।

(६) पूनिर्विनाशः। पवित्रतायान्तु पूतिः। 'पूञो विनाशे' इति विनाश एव नत्व विधानात्।

(७) अवतेः क्तिन्, ज्वरत्वरेति उपधावकारयोरूठ्, उदात्तस्वरो निपातनप्रयोजनम्–ऊतिः=अवनम्। यूतिः, जूतिः इत्यत्रदीर्घनिपातनम्। सातिः इत्यत्र द्यति स्यति' इति ईत्वे प्राप्ते तदभावो निपात्यते। हेतिः–हन्+क्तिन्, अनुदात्तेति नलोपः, अकारस्य एत्वं च निपात्यते। कीर्तिः इत्यत्र ण्यासश्रन्थेति युच् प्राप्तः क्तिन् निपात्यते।

**गुरोश्च हलः ३।३।१०३**

गुरोमतो हलन्तात् स्त्रियामप्रत्ययः । ईहा । ऊहा ।

**षिद्भिदादिभ्योऽङ ३।३।१०४**

जृष् 'ऋदृशोऽङि गुणः ।' जरा । त्रपूष्– त्रपा । भिदा । विदारण एवायम् । भित्तिरन्या । छिदा । मृजा । (**कृपेः सम्प्रसारणं च**) कृपा ।

**आतश्चोपर्गे ३।३।१०६**

अङ स्यात् । उपदा । अन्तर्धा (१) ।

**ण्यासश्रन्थो युच् ३।३।१०७**

अस्यापवादः । कारणा ।

**रोगाख्यायां ण्वुल् बहुलम् ३।३।१०८**

प्रच्छर्दिका (२) । प्रवाहिका । विचर्चिका । क्वचिन्न । शिरोर्तिः । (**धात्वर्थनिर्देशे ण्वुल्वक्तव्यः**) आसिका (**इक् स्तिपौ धातु निर्देशे**) पचिः । पचतिः। (**वर्णात् कारः**) निर्देश इत्येव । अकारः । ककारः । (**रादि फः**) रेफः ।

**नपुंसके भावे क्तः ३।३।११४**

**ल्युट् च ३।३।११५**

हसितम् । हसनम् ।

**करणाधिकरणयोश्च ३।३।११७**

ल्युट् । अनुमानः । अनुमानी ।

**पुंसि संज्ञायां घः(३) प्रायेण ३।३।११८**

**छादेर्घेऽद्व्युपसर्गस्य ३।४।९६**

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे । दन्तच्छदः (४) । आकुर्वन्त्यस्मिन्नित्याकरः ।

**अवे तृस्त्रोर्घञ् ३।३।१२०**

अवतारः । अवस्तारः=जवनिका ।

---

(१) अदन्तरोरुपसर्गवद् वृत्तिः, इति अन्तर् शब्दस्य उपसर्गत्वेन अङ । तथा च वार्तिकम् 'अन्तश्शब्दस्याङ कि विधिणत्वेषूपर्गत्वं वाच्यम्' इति ।

(२) प्रच्छर्दिका=वमनरोगः । प्रवाहिका=ग्रहणी । विचर्चिका=पामा ।

(३) करणाधिकरणयोरित्येव पूर्वसूत्रापवादः ।

(४) दन्ताः छाद्यन्तेऽनेन दन्तच्छदः=ओष्ठः ।

## हलश्च ३।३।१२१

हलन्ताद् घञ्। घापवादः (१)। रमन्ते योगिनोऽस्मिन्निति रामः (२)। अपमृज्यतेऽनेन व्याध्यादिकमित्यपामार्गः (३)।

## ईषद् दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३।३।१२६

एषु दुःखसुखार्थेषूपपदेषु खल्। तयोरेवेति भावे कर्मणि च। कृच्छ्रे–दुष्करः कटो भवता। अकृच्छ्रे–ईषत्करः। सुकरः।

## आतो युच् ३।३।१२८

खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः।

## आवश्यकाधमर्ण्ययोर्णिनिः ३।३।१७०

अवश्यङ्कारी। शतंदायी।

## कृत्याश्च ३।३।१३१

तथा धातोः। अवश्यं सेव्यो हरिः। शतं देयम्।

## क्तिच् क्तौ च संज्ञायाम् ३।३।१७४

आशिषि। वातिः = वायुः। शिवो देया देनं शिवदत्तः।

## अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ३।४।१८

प्राचामिति पूजार्थम्। प्रतिषेधयोरलंखल्वोरुपपदयोः क्त्वा। 'दोदद्घोः'। अलं दत्त्वा। 'घुमास्थे' तीत्वम्। पीत्वा खलु। अलंखल्वोः किम्? माकार्षीः। प्रतिषेधयोः किम्? अलङ्कारः (४)।

## समानकर्तृकयोः पूर्वकाले ३।२।२१

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद् धातोः क्त्वा। 'अव्ययकृतो भावे' (५)। भुक्त्वा व्रजति। द्वित्वमतन्त्रम् (६)। स्नात्वा भुक्त्वा पीत्वा व्रजति।

---

(१) पुंसि संज्ञायामिति विहितस्य घप्रत्ययस्यापवाद इत्यर्थः।

(२) अधिकरणे घञ्। रामः=परमात्मा तदवतारो दाशरथिश्च।

(३) अप–मृज् धातोः घञि, उपसर्गस्य घञ्यमनुष्य इति दीर्घः, मृजेर्वृद्धिः, 'चजो कुः' इति कुत्वम्–अपामार्गः=औषध विशेषः।

(४) भूषणार्थोऽत्रालं शब्दः, घञिरूपम्।

(५) इत्यनेन भावे क्त्वाप्रत्यय इत्यर्थः।

(६) सूत्रे समानकर्तृकयोरिति द्वित्वमविवक्षितमित्यर्थः। तेन अधिकयोगेऽपि, पूर्व–काले विद्यमानेभ्यः सर्वेभ्योऽपि (द्विभ्यां त्रिभ्यो वा) भवतीति यावत्।

**न क्त्वा सेट् १।२।१८**

सेट् क्त्वा किन्न । शयित्वा । सेट् किम्? कृत्वा ।

**रलो व्युपधाद्धलादेः संश्च १।२।२६**

इवर्णोवर्णोपधाद्धलादेरलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः। द्युतित्वा, द्योतित्वा। लिखित्वा, लेखित्वा। व्युपधात्किम् ? वर्तित्वा। रलः किम् ? सेवित्वा। हलादेः किम् ? एषित्वा । सेट किम् ? भुक्त्वा ।

**उदितो वा ७।२।५६**

उदितः परस्य क्त्व इड् वा । शमित्वा । शान्त्वा (१) । देवित्वा । 'च्छ्वोः शूऽनुनासिके चे' ति ऊठ् । द्यूत्वा । दधातेर्हिः । हित्वा ।

**जहातेश्च क्त्वि ७।४।४३**

हित्वा । हाङ्स्तु हात्वा ।

**समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७**

अव्ययपूर्वपदेऽनञ्समासे क्त्वोल्यवादेशः । तुक् । प्रकृत्य । अनञ् किम् ? अकृत्वा । अव्यय पूर्वपदात्किम्? परमकृत्वा ।

**वा ल्यपि ६।४।३१**

अनुदात्तोपदेश–वनति–तनोत्यादीना–मनुनासिक–लोपः । स च व्यवस्थितः। मान्तानिटां वा ! (नान्तानिटां नित्यम्) । आगम्य, आगत्य । प्रहृत्य । अदो जग्धिः । प्रजग्ध्य ।

**न ल्यपि ३।४।६९**

घुमास्थेतीत्वम् । प्रदाय । प्रमायेत्यादि ।

**आभीक्ष्ण्ये णमुल् च ३।४।२२**

पौनःपुन्ये द्योत्ये क्त्वा–विषये णमुल् क्त्वा च ।

**नित्यवीप्सयोः ८।१।४**

आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात् । आभीक्ष्ण्ये तिङन्ते ष्वव्ययसंज्ञक कृदन्तेषु च। पचति पचति। स्मारं स्मारं नमति गुरुम्। स्मृत्वा स्मृत्वा। पायम् २। भोजम् २। श्रावम् २।

---

(१) शमु धातुः, इडभावे 'अनुनासिकस्य क्वि' इति दीर्घः, अनुस्वारपरसवर्णौ'– शान्त्वा ।

**अन्यथैवं– कथमित्थंसु सिद्धा प्रयोगश्चेत् ३।४।२७**

एषु कृञो णमुल् स्यात् सिद्धोऽप्रयोगोऽस्य एवं भूतश्चेत्कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः। अन्यथाकारम् –एवङ्कारम्– कथङ्कारम्– इत्थङ्कारं भुङक्ते। इत्थं भुङक्ते इत्यर्थः। सिद्धेति किम् ? शिरोऽन्यथाकृत्वा भुङक्ते ।

**यावति विन्दजीवोः ३।४।३०**

यावद्वेदं भुङक्ते । यावल्लभते तावदित्यर्थः। यावज्जीवमधीते ।

**निमूलसमूलयोः कषः ३।४।३४**

कर्मण्युपपदे ।

**कषादिषु यथाविध्यनुप्रयोगः ३।४।४६**

यस्माण्णमुलुक्ताः स एवानुप्रयोक्तव्यः । निमूलकाषं कषति । समूलकाषं कषति । निमूलं–समूलं कषतीत्यर्थः ।

**शुष्कचूर्णरूक्षेषु पिषः ३।४।३५**

एषु कर्मसु पिषेर्णमुल् । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीयर्थः । चूर्णपेषम् । रूक्षपेषम् ।

**समूलाकृत–जीवेषु हन्कृञ्ग्रहः ३।४।३६**

कर्मणीत्येव। समूलघातं हन्ति। अकृतकारं करोति। जीवग्राहं गृह्णाति । जीवन्तं गृह्णातीत्यर्थः

**करणे हनः ३।४।३७**

पादघातं हन्ति। पादेन हन्तीत्यर्थः ।

**स्नेहने पिषः ३।४।३८**

स्निह्यते येन तस्मिन्करणे पिषेर्णमुल् । उदपेषं (१) पिनष्टि। उदकेन पिनष्टीत्यर्थः ।

**हस्ते वर्ति–ग्रहोः ३।४।३९**

हस्तार्थे करणे । हस्तवर्तं वर्तयति । करवर्तम् । हस्तेन गुलिकां करोतीत्यर्थः। हस्त–ग्राहं गृह्णाति। करग्राहम्। पाणिग्राहम् ।

---

(१) 'उदकस्योद': इत्यनुवृत्तौ 'पेषं–वास–वाहन–धिषु च' इति सूत्रेणोदकस्योदादेशः ।

**स्वे पुषः ३।४।४०**

करण इत्येव । स्व इत्यर्थग्रहणम्। तेन स्वरूपे पर्याये विशेषे च णमुल्। स्वपोषं पुष्णाति। धनपोषम्। गोपोषम् ।

**समासत्तौ ३।४।५०**

तृतीयासप्तम्योर्णमुल् सन्निकर्षे। केशग्राहं युध्यन्ते। हस्तग्राहं युध्यन्ते ।

**स्वाङ्गे तस्प्रत्यये कृभ्वोः ३।४।६१**

क्त्वाणमुलौ स्तः। मुखतःकृत्य मुखतः कृत्वा। मुखतः कारम्। मुखतो भूय। मुखतो भूत्वा। मुखतो भावम् ।

## ॥ इति कृदन्तप्रक्रिया समाप्ता ॥

### अभ्यासः

(१) **संज्ञासु धातुरूपाणि—इति श्लोकस्याभिप्रायः**

संज्ञासु=यदृच्छाशब्देषु वायु—दारु—गवादि—शब्देषु डित्थ डवित्थादिषु च सम्भवन्तो धातवः प्रत्ययाः उण् जुण् ड इत्यादयश्च कल्पनीयाः, गुणवृद्धि सम्प्रसारणादिकार्यानुसारेण णकार-ककार—डकारादिकमनूबन्धं च कल्पयेदित्येवोणादिशास्त्रम्। पाणिनिमते शाकटायनोक्ताना मुणादिसूत्राणां 'उणादयो बहुलमिति बहुलग्रहणादेव गतार्थत्वमिति भावः।

(२) कृष्णं दर्शको याति—इत्यत्र दृश्धातोः 'तुमुण्वुलौ क्रियायां क्रियार्थायामिति ण्वुल्प्रत्यये दर्शक इति रूपं सम्पद्यते । कृष्णमित्यत्र तु 'नलोकाव्यये' ति षष्ठीनिषेधात् कर्मणि द्वितीया ।

(३) लिख् धातोः क्त्वाप्रत्यये इडागमे 'रलो व्युपधाद्धलादेः संश्चे' ति वैकल्पिककित्वात् कित्वपक्षे गुणनषेधे लिखित्वा इति, कित्वाभावपक्षे गुणे लेखित्वा इति रूपद्वयं सम्पद्यते इत्यादि ।

### अभ्यासार्थं प्रश्नाः

(१) **संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।**
**कार्या द्विद्यावनूबन्धमेतच्छास्त्रमुणादिषु ॥**

अस्याः कारिकाया अभिप्रायो लिख्यताम् ।

(२) कृष्णं दर्शको याति—इत्यत्र दर्शक इत्यस्य साधुत्वं प्रदर्श्य, कृष्णमित्यत्र द्वितीयान्तश्च समर्थ्यताम् ।

(३) अधस्तनप्रयोगा धातुप्रत्यय निर्देशपूर्वकं ससूत्रनिर्देशं साध्याः
राग:, चयः, यवः, वेपथुः, स्वप्नः, उपधिः, स्तुतिः, सम्पत्, त्रपा उपदा, चूत्वा, आगम्य
अवतारः, दन्तच्छदः, स्मारं स्मारं नमति गुरुम् ।

(४) हलश्चेति सूत्रस्यार्थं विलिख्य, उदाहरणं देयम् ।

(५) शुष्कपेषं पिनष्टि–इत्यत्र णमुल् विधायकसूत्रं लिख्यताम् ।

(६) "अप्रत्ययात्" इति सूत्रस्योदाहरणद्वयं देयम् ।

(७) लिख् धातोः क्त्वा प्रत्यये ससूत्रं रूपद्वयं लेख्यम् ।

॥ इति कृदन्तप्रक्रिया समाप्ता ॥

(बाँकी भाग दुईमापढ्नुहोला)

## समूह गायनमा गाउने राष्ट्रिय गीत

हटने होइन डटी लडने नेपालीको बानी हुन्छ
कहिले नझुक्ने शिर उभेको स्वाभिमानी नेपाली हुन्छ
विश्वको कुना काप्चामा खोज, नेपालीको मुटुमा खोज
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ . . . २
श्रीपेचको नवै रङ्ग डाँफे चरीले बोकेर उड्छ
एकता अनि वीरताको गाथा सारङ्गीले गाउँदै हिंड्छ
खुकुरीको डोबभित्र वीरहरूको पाइला हुन्छ
पर्वतराज हिमालमुनि गुराँस त फुलेको हुन्छ
गुराँसको रङ्ग हेर, त्यो पनि त रातो हुन्छ
हाम्रो मुटुको रगत हेर, त्यो पनि त रातो हुन्छ
रातो रङ्ग सिम्रीकको रङ्ग, चन्द्र सूर्य झण्डाको रङ्ग, त्यो पनि त रातो हुन्छ
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ . . . २
हाम्रो मादल शान्तिको लागि मरुभूमिमा परेड खेल्छ
स्वयम्भूको दुइटा आँखाले न्याय अन्याय छुट्याई हेर्छ
बाँच र बचाऊ भन्ने छातिभित्र कुँदिएको हुन्छ
ठेला उठेको हातमा हेर, पसीना त बगेको हुन्छ
पसीनाको नदी हेर, त्यो पनि त नीलो हुन्छ
हामी माथिको आकाश हेर, त्यो पनि त नीलो हुन्छ
नीलो रङ्ग शान्तिको रङ्ग, हाम्रो झण्डाको किनारको रङ्ग, त्यो पनि त नीलो हुन्छ
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ



